आचार्यश्रीमत्सत्यनारायणशर्मणः

प्रवचनानि



# प्रवचन - पारिजातः



सञ्चयित्र्यौ

डा० श्रीमती यज्ञसेनी पोपटः

डा० श्रीमती सुषमा लोहिया

वितरकः

**चौखम्भा विश्वभारती**

चौक

वाराणसी

# भूमिका

सुविशालस्तावत् संस्कृतवाङ्मयनिधिः। अनुदिनमेधत एषः। संस्कृतभाषां तदीयं च विद्यासन्दोहं प्रति समाकृष्टेन गुणग्राहिणा यूरपदेशीयसुधीगणेन स्वकीयसमालोचनसरण्या विविधपक्षालम्बनपूर्वकं समारब्धमनुशीलनम्। संस्कृतभाषा साहित्यं च भारतीयनागरिकतेतिहासविषये पाश्चात्यैर्विद्वन्मूर्द्धन्यैर्विधीयमानस्य परिशीलनस्य विषयभूतानां चतसृणां विद्याशाखानामुद्भावनेऽभिवर्द्धने च मुख्यं स्थानमधिजग्मतुः। एतावुभावाकरौ पाश्चात्यदेशेष्वनुसन्धानविषयतया--१ तुलनात्मकभाषाविज्ञानम्, २. तुलनात्मकदेवताविज्ञानम्, ३. तुलनात्मकधर्मविज्ञानम्, ४. तुलनात्मकसाहित्यपरिशीलनं चेति समुद्भावयामासतुः। निखिलमिदमनुशीलनमितिहासक्रमाधारमपेक्षत इतीदं भारतीयपरम्पराकाणां विदुषां कृते प्रत्यग्रं सिद्धम्।

पण्डितप्रवरेण श्रीसत्यनारायणशर्ममहोदयेन विरचितेऽस्मिन् प्रवचनपारिजाताख्ये प्रबन्धे शर्मण्यदेशीयानां संस्कृतमनीषिणां विचारसरणिरतिकौशलेन संस्कृतगिरा प्रदर्शिता। भारतीयानां संस्कृतज्ञानां विशेषतश्च परम्परागतसंस्कृतविचक्षणानां तुलनात्मिकायां दिशि प्रेरणाय साहायकं समर्पयिष्यत्येषेति प्रत्ययो मदीयः। शर्मण्यदेशीयैः संस्कृतज्ञकोविदैः संस्कृतवाङ्मयनिधेः कानि कानि रत्नानीह विचितानीति जिज्ञासवः प्रेक्षिष्यन्ते।

• भारतीयानां हृदि कृष्णद्वैपायनव्यासप्रणीते श्रीमद्भागवतमहापुराणे निगमकल्पतरोर्गलिते फलेऽवर्णनीया श्रद्धा वरीवर्ति। प्रस्थानचतुष्टयात्मकमिदं महापुराणं मतं धर्माचार्यैः। शर्मण्यदेशीयेन परमविदुषाऽऽचार्यहक्करेण श्रीमद्भागवतस्य प्रह्लादोपदेशप्रसङ्गमाधारीकृत्य सफलं मन्थनं विधाय

कतिचन दार्शनिकानि तत्त्वरत्नानि गवेषितानि। सांख्यवेदान्तयोरविभेद-प्रतिपादनाय प्रयासो हृक्करस्य। तत्रात्मतत्त्वं जागतिकं स्वप्नवत्त्वं च सुविवेचिते जिज्ञासूनां ज्ञानवर्द्धनाय विदुषां च प्रीणनाय सम्पत्स्येते। आचार्यहृक्करस्य प्रयत्नो दर्शनविषये निर्भरं श्लाघ्यः। शङ्कराचार्यस्य ग्रन्थानां पौर्वापर्यविमर्शनप्रसङ्गे ग्राह्यग्राहकयोः प्रयोगो वेदान्तग्रन्थेषु बौद्धग्रन्थेभ्यः समागत इति नूतनो विचारः संस्कृतज्ञदोषज्ञानां पुरस्तेन तेने। तन्मतानुसारेण द्वयाद्वययोरद्वैताद्वैतयोरर्थो गौडपादस्य कृतितः सुगमतयाऽवगम्यते, न तु शाङ्करकृतिभ्यः। आचार्यहृक्करस्यानुशीलनानु-सारेण—अद्वैतवादस्य स्थाने 'ऐकात्म्यवादः' इत्यभिधानमुपपद्यतेतरां शाङ्करसिद्धान्ताय।

हृक्करवद् ऊनविंशतिख्रीस्तशताब्दभवः शर्मण्यदेशीयो बुधवरो गार्बेः सांख्यशास्त्रमुद्गाढमालोडयत्। पुरातनं सांख्यशास्त्रं कुत्र कदा समुत्पन्नम्, ब्राह्मणमब्राह्मणं वा, तदीयाः कर्तारः क्व कदा च जाता इति समस्यानाँ समाधित्सया तेन यद् विचितम्, तन्नूनं प्रशंसामर्हति। श्रीसत्यनारायण-शर्ममहोदयेनेह शर्मण्यदेशीयानामन्येषां याकोबि-मोक्षमूलरप्रभृतीनां मतान्यपि तुलनार्थं समुपन्यस्तानि खलु नूत्ननिष्कर्षाय प्राभवन्।

विंशख्रीस्तशताब्दे शर्मण्यदेशीयः संस्कृतज्ञकोविदो दालमानः सांख्य-मतस्य पुरातनताविषये जग्रन्थ ग्रन्थम्। वर्लिननगरात् प्रकाशमुपेतोऽसौ। श्रीसत्यनारायणशर्ममहोदयेन स्वकीये प्रवचन एटमान-ओल्डेनबर्ग-फ्राउ-वालनराभिधानां लब्धवर्णानां सांख्यशास्त्रविषयकविचारैः सह तुलनां विधाय नूनं पल्लवितो विषयः। इतिहासक्रमाधारकमुन्नयनह्रासादिकं समीक्षितम्। स्मृतिषु सांख्यमतविवेचनम्, पञ्चशिखद्वारा पङ्ग्वन्धादि-न्यायप्रवर्तनविचारो नितान्तमभिनवं पन्थानं निर्दिशति।

यशोऽर्थव्यवहारकल्याणविस्तारकस्य काव्यस्य परिशीलनाय सुचिरं बद्धपरिकराः सादरं यूरपदेशीया अभूवन्। हालविश्वविद्यालयस्य संस्कृता-चार्येण आर्० पिशलमहाभागेन शृङ्गारतिलकमाधारीकृत्य यत् परि-शीलनमनुष्ठितम्, तदत्र सुरगिरा सूपनिबद्धम्। प्रथितयशसा याकोबिना

किरातार्जुनीयशिशुपालवधयोः कथावस्त्वादिकं सर्वं पर्यालोचयता साम्य-वैषम्ये परीक्षिते। द्वावेव ग्रन्थकारौ भारविमाघौ सतीर्थ्यविकशास्त्राव-लम्बिनावास्तामिति सम्भावयति याकोबी। माघो भारवेः प्रतिस्पर्धी समभूत् किम्? माघस्यानुकरणसरणिः स्वोपज्ञेति विचारततिर्नितान्तं विद्वज्जनमनोविनोदिनी सेत्स्यति। कविकुलगुरुं महाकविं कालिदास-मन्तरा संस्कृतवाङ्मयविचारशृङ्खला विकलेति मत्वेह श्रीशर्ममहोदयेन सप्तसु प्रवचनेषु कालिदासीयाना सर्वेषां ग्रन्थरत्नानां यत् पर्यालोचनं कृतम्, तदग्रेसारयति ज्ञानप्रकाशम्।

शर्मण्यदेशीयः पाणिनीयव्याकरणतत्त्वज्ञः श्रीपाउल-थीमेमहोदयः कामप्यनिर्वचनीयां समज्ञामावहति। पर्यालोचिता तेन महाभाष्यकार-पतञ्जलेर्निरुक्तकारस्य यास्कस्य च मन्त्रव्याख्यानवर्तनी। पतञ्जलिना प्राक्तनवैयाकरणानामेव मतमाविष्कृतम्, न तु स्वोपज्ञतां समाश्रित्य वेदार्थः प्रकटित इत्युभयोर्व्याख्यानवैभिन्न्यमालोच्य तदीयं मतम्। 'सुदेव'-शब्दव्याख्यानपर्यालोचने पाउल-थीमेमहोदयो महाभाष्ये कानिचन संशो-धनान्यपि निरदिशत्। भारतीयानां पाणिनीयवैयाकरणानां तान्यवश्यं विचारकोटिमाटीकन्ते।

शर्मण्यदेशीयः फ्रीडरिख-वोन-नीत्सेमहोदयः सुप्रथितो दार्शनिको विद्वान् मनुस्मृतेरनुशीलनं वर्णव्यवस्थाप्रणालीमधिकृत्य प्रवर्तयामास। यद्यपि स संस्कृतज्ञताऽभावात् स्वसतीर्थ्याभ्यां शोपेनहावर–रिचार्डवाग्नर-महोदयाभ्यां सकाशान्मनुस्मृत्यर्थमज्ञासीत्, तथापि तत्कृतं पर्यालोचनं पाश्चात्यदृशमभिव्यङ्क्तुमलं भविष्यति।

कौटलीयमर्थशास्त्रमधिकृत्य हिल्लब्रान्तोऽनुसन्धाता लिलेख यत् कृति-रियं कौटलीयसम्प्रदायस्य रचना, या तेन स्वयमाविर्भाविता। योहान्न-याकोबमायराख्येन विद्वत्तल्लजेन शर्मण्यभाषानुवादसहितोऽयं प्रकाशितोऽ-र्थशास्त्रग्रन्थः। आउफरेख्तनामकेन विदुषापि विवेचनानि कृतानि। अशीत्यधिकाष्टशताधिकसहस्रतमे खीस्ताब्दे ए० म्यूलरनामकेन कृतिना गरलविषयिण्या आरब्यभाषामय्याः पाण्डुलिपेः प्रकाशनेन किमपि नूत्न-

मैतिहासिकं तथ्यमाविष्कृतम्। एवमेव याकोबी निबन्धं न्यभान्त्सीत्, फ्रीडरिख-विल्दोलभश्च कौटलीयार्थशास्त्रे राजनीतिकवादानुवाद इत्याख्यं पुस्तकं प्राकाशयत्। संस्कृतविद्याभृङ्गस्य मोक्षमूलरस्य जीवन-चरितविषयेऽपीह संस्कृतगिरा श्रीसत्यनारायणशर्ममहोदयेन निबद्धमस्ति किञ्चिदनुकरणीयम्।

इत्थं वेदान्तसांख्यदर्शनसाहित्यव्याकरणार्थशास्त्रादितत्त्वविवेचनप्रव-चनपारिजातरूपोऽयं प्रवचनपारिजातो विचारसरणेरग्रेसारणाय भृशमु-पादेयो भविष्यति संस्कृतज्ञजिज्ञासूनामित्यत्र नास्ति कश्चन संशीतिलेशः। ग्रन्थस्यास्य रचयिता प्रकाशकश्च साधुवादार्हावेतादृशस्य ग्रन्थमणेर्लेखनाय प्रकाशनाय च। प्रवचनपारिजातोऽयं कस्यचिदपि विश्वविद्यालयस्य पाठ्यपुस्तकत्वेन ध्रुवं नियोक्तुं युज्यत इति प्रत्येति।

नवरात्रारम्भे
२०३४ वैक्रमाब्दे गुरौ
(१३-१०-७७ ख्रीस्ताब्दे)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

# प्राक्कथनम्

प्रवचनेष्वेतेषु मया शर्मण्यदेशीयानां विदुषामैतिह्यव्यपाश्रयाऽनुचिन्तना यावच्छक्यमादर्शिता। तेषां बहुविधविषयकमनुशीलनं विषयीकृत्य कल्ननगरस्थादाकाशवाणीकेन्द्रात् प्रसारितानि प्रवचनानीमानि एकस्मिन् स्थाने मुद्रापयित्वा तेषां पठनसौलभ्यं निष्पादयितुं विहितोऽयं यत्नः सुरभारतीसमुपासकानां मुदे भवितेत्याशास्यते।

अस्ततन्द्राणां प्रतीच्यविदुषामनुसन्धानप्रक्रियावगमार्थन्तेषां प्रतिपादयिषितमवबोद्धुञ्च प्रतीच्यवाचामवगतिर्विधातव्या। आङ्ग्लभाषाप्रतिपत्तिरेव केवला एतदर्थमपर्याप्ता। प्रवचनेष्वेतेषु स्थानसंकोचान्मया दिङ्मात्रमेव केवलमादर्शितम्।

संस्कृतवाङ्मयस्य हृद्यत्वे, गाम्भीर्ये, गरिम्णि च विसंवादावसरो न कोऽपि प्रकटयति। परं सर्वत्र सर्वेषामैकमत्यं कथं भवितुमर्हति कृतधियाम्। साम्यवैषम्ययोर्द्वैतमिदमिह जगति सर्वं खलु अभिव्याप्नोति। कियन्तिचिन्निदर्शनानीमानि विश्वविपश्चिन्माहितं संस्कृतवाङ्मयसौन्दर्यमधिजिगमिषतृणामुत्साहशैथिल्यमपाकुर्युश्चेद् वित्तार्जनसंभावनाप्रातिकूल्यादवाप्तदौर्बल्यानि मनांस्यूर्जयित्वाऽभिनवकर्मभ्यश्चोदयेरंश्चेत्तर्हि फलेग्रहिश्रमः स्याम्।

बहुविधद्रुमलतागुल्मातते गवेषणोपवनेऽस्मिँश्चिन्तनफलानि चिन्वतो मे समुत्साहं वर्धयद्भिराकाशवाणीकेन्द्रस्य पदाधिकारिभिर्विशेषतो डॉ० ग्यबल ग्रोस इत्याख्येन समधीतसंस्कृतेन विदुषाऽपेक्षितं सौविध्यं विधाय चिकीर्षितासिः सरलीकृतेत्येतदर्थमधमर्णतां किल ज्ञापयामि। सार्वभौमसंस्कृतप्रचारकार्यालयस्य सञ्चालकपदमधितिष्ठतः पण्डितवासुदेवद्विवेदिनो भारतान्मदनुपस्थितावपि ग्रन्थप्रकाशनार्थं स्वसहकर्मिभिः सह मुद्रणपूर्वपत्रपाठादि मैत्रीपुरःसरं बहुशाखं कार्यमप्यविस्मरणार्हम्। अन्येऽपि येषां सत्प्रयत्नेनोत्साहोपबृंहणेन च मत्प्रवचनानि ग्रन्थाकृतिषु प्रकाशतामासादयन्ति ते सर्वे महानुभावा धन्यवादमर्हन्तीति शम्।

सत्यनारायण शर्मा

## अर्पणम्

यस्यानुध्यानाज्जीवनमरोः सैकतदाहोऽयमुपशाम्यते

तस्यैव व्यतर्क्यलिङ्गस्य विश्वविसर्गहृष्टये

# विषयानुक्रमणिका


(१) श्रीमद्भागवतपुराणान्तर्गतः प्रह्लादोपदेशः १
(२) ,, ७
(३) हिरण्यकशिपोस्तत्त्वदर्शनम् १२
(४) शाङ्करकृतीनां पौर्वापर्यविमर्शनम् १७
(५) शाङ्करमते परात्परस्य सच्चिदानन्दरूपता २४
(६) सांख्ययोगयोः पुरातनोपदेष्टृविमर्शः ३०
(७) ,, ३६
(८) ,, ४२
(९) काव्यालङ्कारं श‍ृङ्गारतिलकं तयोः प्रणेतारञ्चोद्दिश्य विमर्शनम् ४८
(१०) भारविमाघयोः पौर्वापर्यादिविचारः ५४
(११) ,, ६०
(१२) ,, ६६
(१३) महाकवेः कालिदासस्य काव्येषु पतत्रिणः ७२
(१४) ,, ७७
(१५) ,, ८२
(१६) ,, ८७
(१७) ,, ९३
(१८) ,, ९८
(१९) कालिदासस्य काव्येषु जलजगत् १०३
(२०) पतञ्जलियास्कयोर्वैदिकपदव्याख्यानम् १०८
(२१) ,, ११४
(२२) मनुस्मृतिं प्रति दार्शनिको नीत्शेः १२०

| | | |
|---|---|---|
| ( २३ ) | कौटिलीयार्थशास्त्रस्यानुशीलनम् | १२५ |
| ( २४ ) | ,, | १३० |
| ( २५ ) | मोक्षमूलरस्य जीवनदर्शनम् | १३६ |
| ( २६ ) | ,, | १४२ |
| ( २७ ) | श्रीप्रह्लादचरितविषयको विमर्शः | १४६ |
| ( २८ ) | ,, | १५३ |
| ( २९ ) | ,, | १५९ |
| ( ३० ) | शाङ्करकृतीनां पौर्वापर्यविमर्शनम् ( चतुर्थप्रवचनादूर्ध्वं पठितव्यम् ) | १६४ |
| ( ३१ ) | शाङ्करमते परात्परस्य सच्चिदानन्दरूपता ( पञ्चमप्रवचनादूर्ध्वं पठितव्यम् ) | १७० |
| ( ३२ ) | कठोपनिषदो मूलपाठविषयकमनुशीलनम् | १७६ |
| ( ३३ ) | ,, | १८२ |
| ( ३४ ) | ,, | १८५ |
| ( ३५ ) | पञ्चतन्त्रविषयको विमर्शः | १८८ |
| ( ३६ ) | ,, | १९१ |
| ( ३७ ) | ,, | १९४ |
| ( ३८ ) | ,, | १९७ |


( कोल्न–आकाशवाणीकेन्द्रात् प्रसारितानि प्रवचनानीमानि शर्मण्यदेशीया गवेषणा अनुचिन्तनाश्च विषयीकुर्वन्ति )

## प्रथमं प्रवचनम्

श्रीभगवच्चरणोत्पलसौगन्ध्यप्रविलुब्धचेता विधूतनिखिलपार्थिवव्यासङ्गः प्रह्लादः कायमाजो बहुश उपदिशन् पुराणेषु दरीदृश्यते। विभूम्ने सर्वं विनिवेद्य स्वयंशस्तिरस्करीं पदवीं समवाप्य भक्तिनावा दुस्तरं भवाब्धिमसौ तीर्णवानिति कथा नानाविधग्रन्थेषु वीक्ष्यन्ते। ननु परमं पारमारुरुक्षूणां संशयच्छेत्ताऽसम्भावितदैत्यकुले समुत्पन्नोऽपि परमप्रेमरूपया भक्त्या प्रतिलब्धप्रतिपत्तिर्नृसिंहावतारहेतुभूतोऽसौ तत्त्वचिन्तनस्य कतमां पथ्यामङ्गीचकार? विषयममुमवलम्ब्य जर्मन्या बहुवत्सरपूर्वमेव विमृष्टम्।

भारतीयानां हृदि श्रीमद्भागवतपुराणार्थं निगमकल्पतरोर्गलितफलार्थं या श्रद्धाऽविद्यत, विद्यते च, सा वर्णनं नापेक्षते। सनातनधर्मस्य प्रस्थानचतुष्टये महामुनिकृतं पुराणतिलकमिदं

गण्यते, नितरां समाद्रियते च। पारमहंस्यममलं ज्ञानं, ज्ञानविरागभक्तिसमन्वितं नैष्कर्म्यञ्च ग्रन्थेऽस्मिन्नाविष्कृतमतस्तच्छृण्वतः प्रपठतो विचारयतो मुमुक्षोर्भवबन्धनानि स्रंसेरन्निति पुराणमाहात्म्यं श्रद्धावद्भिः सादरं स्वीक्रियते। पुराणेऽस्मिन् प्रह्लादकथाऽपि वर्णितेति संकेतः प्रकृतप्रवचनार्थमलम्। आचार्यहृक्करो भागवतस्य प्रह्लादोपदेशानां दार्शनिकतत्त्वावगमार्थमपि कार्यव्यापृतो बभूव। पुराणस्यास्य काव्यत्वं सुविदितम्। तथापि दार्शनिकतत्त्वं वर्णयता पुराणकारेण क्रमानुगतिर्नोज्झिता। बौद्धमतसाम्य पुराणेऽस्मिन् प्रह्लादोपदेशप्रसङ्गे कादाचित्कमेव। बौद्धानां विचारसरणि स्मारयन्तश्चत्वारः श्लोका एव लक्ष्यन्ते। सप्तमे स्कन्धे हरिं प्रह्लादस्तन्न्यस्तहृदयेक्षणः प्रेम्णा हृष्यत्तनुरस्तौषीत्। स्तवनप्रसंगेऽसौ सर्वप्राणिश्रेयसे भगवन्तं प्रार्थयते। भववैतरण्यां स्वपुण्यापुण्यकर्मभिः पातितान् स्वपरविग्रहवैरमैत्रान् जनान् ईक्षमाणो विश्वानुग्रहं कांक्षन्नखिलगुरुमार्त्तबन्धुं मोहमूढानुत्तारयितुं याचमानः स्वकं लाभं समुपेक्षते, परदुरत्ययवैतरण्या नैवोद्विज इति विनिवेदयन् पुण्यश्लोकस्य महिमगायनस्य सुधाम्बुधौ मग्नचित्तत्वात्। परोपकारैकव्रतोऽसौ केवलं इन्द्रियार्थमायासुखायानर्थकं भारमुद्वहतो भगवद्विमुखचेतसः शोचते।

प्रायेण देवमुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने परमार्थनिष्ठाः।
नैतान्विहाय कृपणान्विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये॥

ननु प्रवृत्तिसाम्यमिदं बौद्धानां प्रभावमभिसूचयत्येवेति चेन्न । जगद्दावदहनसन्त्रासितान् कालाकृष्टकायानसुभृतः समुपेक्ष्य केवलं नैजकल्याणाभिवाञ्छा बोधिसत्त्वानां चेतसि समुद्वेगं किल जनयति स्म । इत्थमेवान्यान् संत्यज्य केवलं स्वानुभूत्यर्थं परमधाम्नः रसमास्वादयितुं प्रह्लादोऽपि नोत्सेहे ।

श्रीमद्भागवते सांख्यसिद्धान्तोऽपि प्रह्लादकथायामाभीक्ष्ण्येन लभ्यते । सप्तमस्कन्धस्य श्लोकं प्रति आचार्यशङ्करो विशेषतः प्रह्लादवृत्तानुशीलकानां ध्यानं चिकृषति, यत्राष्टौ प्रकृतयस्त्रयस्तद्गुणाः षोडश विकाराश्च निरदेशिषत । पुमानेकः समन्वयादिति व्याहारः सांख्यमताद् भिन्न इति तु स्पष्टमेव । अष्ट प्रकृतयोऽपरग्रन्थेष्वपि वर्ण्यन्ते । श्रीमद्भगवद्गीतायां सप्तमेऽध्याय एवमेवाष्टौ प्रकृतयः कीर्त्तिताः । चरकसंहिताऽप्यत्र विषये द्रष्टव्या । ईश्वरकृष्णस्य सांख्यकारिकायामप्यष्टौ प्रकृतय उपवर्णिता इति मन्तुं पार्यते, मूलप्रकृत्या साकं सप्तानां प्रकृतीनां समुल्लेखात् । महदहङ्कारः पञ्चमहाभूतानि प्रकृतिविकृतयश्च प्रकृतिश्चाभ्युदिताः । श्रीमद्भागवतस्य भाष्ये प्रथितयशस्केन श्रीधरस्वामिना एवंभूतमेव स्पष्टीकरणं विदधे । ननु अष्टौ प्रकृतय इमाः काः सन्तीति प्रश्नः कथं समाधीयेत ? समाधानस्यान्यां पथ्यां प्रत्यप्याचार्यशङ्करोऽनवधानो नास्ति । श्रीमद्भगवद्गीतायां सप्तमेऽध्याये मनोऽपि परिगणितं, मूलप्रकृतिमपहाय । षोडश विकारास्तु त एव निगदिता येषां दिग्दर्शनं सांख्यकारिकायां बोध्यते ।

ननु श्रीमद्भागवते प्रह्लादस्य दर्शने सांख्यसरणिः प्राधान्येनानुसृता, वेदान्तसरणिर्वा ? मुख्यं प्रतिपाद्यमुपोद्बलयितुं भवमरोर्भयस्य भेदनीं भारतीं प्रकटयितुं पुराणकर्त्रा वेदान्तस्य पथ्या किल विवृतेत्युपरिष्टादुपपादयिष्यते। आचार्यहङ्करस्य दृष्टौ वेदान्तस्यैव प्रकारविशेषोऽत्र सुधीभिरन्वेष्टव्यः। एकं सांख्यं च योगं च यः पश्यति स पश्यतीति योगीश्वरस्य व्याहृतिमनुसरता सांख्यवेदान्तयोरविभेदः प्रतिपादयितुं शक्यते किल। सांख्यमतं वेदान्तं सर्वत्र विरुणद्धीति दृशिः प्रमाणोपारोहा नास्ति। श्रुतिषु श्रुतीनां दोग्ध्रा भगवता वासुदेवेन कल्याणस्य पन्थानं दिदृक्षुभ्यः प्रदत्ते गीतामृते, महाभारतान्तर्गतेषु बहुषु ग्रन्थेषु या दर्शनपद्धतिर्व्यंतानि, तस्यां पञ्चविंशतिस्तत्त्वानि प्रतिपन्नान्यात्मैक्यवादेन साकम्। सांख्यस्य बहवः सम्प्रदायाः सुदीर्घकालं वेदान्तस्यैवोपात्तदिग्विशेषाः सम्प्रदाया आसन् श्रुतीनामेव पन्थानं समाश्रयन्तः। पञ्चविंशत्यास्तत्त्वानामस्तमितभेदबुद्धेश्च सङ्गतिरशंक्या नास्ति।

भवतु तावत्। श्रीमद्भागवतपुराणन्तु श्रुतीनां सरणिमेव द्रढयाञ्चक्रे। भक्तिवेदान्तयोः खलु समन्वयो ग्रन्थेऽस्मिन् दरीदृश्यते। अनन्तसुखैकतानस्य विधूतनानात्वस्य ध्यानामृतपायिनां भक्तिपरमाणां कृते पुराणमिदंसाद्योपान्तं श्रुतिसारसमुद्धरणमेव खलु। मङ्गलाचरणस्य आदिश्लोकादेव ग्रन्थस्यास्य वेदान्तसङ्गतिर्विशदीभवति—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

महामुनेर्हृदयग्रन्थिभेदके श्रुतिसम्मते ब्रह्मसूत्रेऽपि जन्माद्यस्य यत इति ग्रन्थारम्भ एव सूत्रितम् ।

ननु बहुर्चचितोऽयमात्मा किंलक्षणः किंस्वभावः किंधर्मेति प्रश्न अनायासेनैव भवाब्धिं तितीर्षतां चेतसि समुदेति । निर्दग्धबीजानुशयः प्रह्लादो भागवतस्य सप्तमस्कन्धे नित्योऽव्ययः, शुद्धः, एकः, क्षेत्रज्ञः, आश्रयः, अविक्रियः, स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृत इत्यात्मनो द्वादश लक्षणानि निर्वर्ण्य देहादावहंममेत्यसद्भावं त्यक्तुं कल्याणचिकामयिषून् प्रेरयति । क्षेत्रज्ञ इति संज्ञा श्रुतिषु गीतायाञ्च व्यवहृतेति सुधियां विदितचरमेव । क्षेत्रक्षेत्रज्ञयोर्ज्ञानमेव ज्ञानं, सर्वक्षेत्रेषु मामेव क्षेत्रज्ञं विद्धि इत्यभिधाय वासुदेवेन भगवता पदस्यास्य गुर्वर्थता खलु क्लृप्ता ।

आत्मनो नव विशेषणानि तु सांख्येऽपि निर्विचिकित्समभ्युपपद्यन्ते । किन्तु एक इति विशेषणन्तु सांख्येऽनभीष्टम् । हेतुत्वमपि । आचार्यहक्करस्य दृष्टौ प्रह्लादस्यात्मोपदेशस्य विशेषोऽयम् ।

विगर्ह्यमोहजाले व्यथमाना मरौ तृषः शान्त्यर्थं सलिलमन्विष्यन्तोऽविद्याचण्डवातैरितस्ततो नीयमाना अनुचितमुचित-

मिति मन्वाना जनाः सर्वसत्त्वानामोकं कथं प्राप्नुयुः, क्षुल्लसु-खाग्रोरुभवदुःखमुपगतास्ते कथं त्रिविधतापं शमयेयुरिति चिकीर्षितं संमुखीकृत्य प्रह्लादो नानाप्रसङ्गेषु यदूचिवांस्तत्र काव्यदर्शनयोः समन्वयस्तु स्वाभाविक एवेति शम् ।

# द्वितीयं प्रवचनम्

जगदुपकृतिमर्त्यस्यामर्त्यविभोर्भक्तियोगेनोपासनमुपादधानानां जनानां चेतांस्याप्याययतः प्रह्लादस्य भागवतपुराणान्तर्गतोपदेशो वेदान्तोदितमनुहरतीति पूर्वतने प्रवचने प्रपञ्चितम्। तस्य व्याहरणानि पुराणस्यास्य दार्शनिकं पक्षमनुशीलयद्भ्यो विशिष्यन्ते, वस्तुप्रतिपादनपद्धतेर्विशेषात्। संसृत्युद्भवविलयलीलस्य पन्थानमनुसन्दधतोऽस्य वक्त्राद् यद् विनिःसृतं तस्यानुशीलनमपार्थकं भवितुं नार्हतीत्यलमतिविस्तरेण।

ननु विनश्यत्स्वविनश्यन्ननुशोचितुमनर्होऽप्रकम्प्यश्छेदनदहनक्लेदनादिभिरसंस्पृष्ट आत्मा कोऽस्ति? सांख्येऽद्वैतवेदान्ते च पुरुषबहुत्वं पुरुषैक्यञ्च ऋषिभिःप्रत्यपादिषाताम्। दृष्टिभेदस्यास्यापाततां दिदृक्षद्भिस्तु तयोः सामञ्जस्यं समन्वयश्च चिकीर्ष्येते। श्रीमद्भागवतपुराणस्य श्लोकानुसारमात्मा प्रह्लाददर्शने न केवलं

नित्योऽव्ययो विशुद्ध एव, स व्यापकः सङ्गरहितोऽनावृतश्च। प्रह्लादेनात्मार्थमित्थं यानि विशेषणानि प्रयुयुजिरे तेषां रामानुजाचार्यादीनामपरभागवतपुराणसमाश्रितानां मतैरसामञ्जस्यं कथमपनीयेत? महापुराणस्यास्य कल्मषापहत्वं निश्रेयससाधनत्वन्तु एतैर्निष्ठातिरेकेणाभ्युपपन्ने।

शङ्कराचार्यादीनां मायावादेनात्मैक्यवादेन च श्रीमद्भागवतं साम्यं विभर्त्तितरामित्याचार्यहुङ्कारः। आत्मनः कायसंसर्गस्य प्रशस्तत्त्ववेतणां कृते निकषतामेति। असङ्गिन आत्मनः कायान्वयः प्रह्लादोपदेशेऽपि प्रपञ्चितः, वेदान्तसिद्धान्तादनपेतः। नित्यानन्दमहोदधेरात्मनोऽर्थसङ्काशैस्तुच्छैरनर्थैः किमपि प्रयोजनं नास्तीति निगद्य काय आत्मानमनुवर्त्तते, कायभृता कर्मसन्दोहः कायेनारभ्यते, कर्मभिरेभिः खलु कर्महेतुभूतं कायमसौ तनुते; उभयमविवेकादेव भवतीति प्रतिज्ञायते। ननु प्रह्लादस्यात्मानुसन्धानप्रक्रिया भागवते किम्भूता? अत्रापि वेदान्तो हि ऊर्जयति।

सप्तमस्कन्धे सप्तमाध्यायेऽनीहमर्थकामधर्माणामपाश्रयमात्मेश्वरं हरिमनुत्तमां गतिं विवदिषन् श्रौतपद्धतिमसावनुसस्ने। जगत्तस्थुरिति द्विधाभूते सङ्घाते परः पुरुषोऽन्वेष्टव्यः। तत्कथम्? नेति नेतीत्यतस्त्यजन्। यत्तन्नास्ति तदपहाय खलु आनन्दकन्दोऽनुसन्धेयः। बुद्धेर्जागरणस्वप्नसुषुप्तयो येनानुभूयन्ते स एव ध्यातव्यः। स एव सर्वस्याध्यक्षीभूतः। इमे पर्यस्ता बुद्धिभेदाः कर्मभिरुद्भवन्ति। कल्याणं चिकीर्षता एभिरात्मनः स्वरूपं बुध्यते, गन्ध-

-र्वायुरिव। गुणसङ्गादेव नित्यमुक्तस्यास्य निर्वृतिर्भवति। त्रिगुणात्मनां कर्मणां बीजनिर्हरणार्थं यतितव्यं श्रेयोऽर्थिना। ब्रह्मनिर्वाणसुखमेव सुखम्। असुभृतां जगच्चक्रशातनमधोऽब्जजालम्बनमेवेत्यत्र भक्तियोगस्य महिमा सङ्कीर्तितः। पारक्यं देहमवाप्य क्षणभंगुरायुषः काम्रा न ध्यातव्या इत्युपदेशस्य नास्ति कश्चिद् विशेषः।

अथ नेति नेतीति तत्त्वान्वेषणपद्धतिर्वेदान्ते बहु मन्यते। बृहदारण्यकोपनिषदि नेति नेतीतिवचनं बहुकृत्वः स्मर्यते। उदाहरणार्थं 'तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणा प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिषत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः सहोवाच जनको वैदेहोऽभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि। चतुर्थाध्यायस्य द्वितीयं ब्राह्मणमित्थं परिसमाप्यते। एवमेव द्वितीयाध्यायस्य तृतीये ब्राह्मणे, तृतीयाध्यायस्य नवमब्राह्मणे, चतुर्थाध्यायस्य चतुर्थब्राह्मणे, चतुर्थाध्यायस्य पञ्चमब्राह्मणे च नेति नेतीति व्याह्रियते।

अन्वयव्यतिरेकेण विवेके नेति पदयोः प्रयोगो वेदान्तस्य दिशमभिसूचयति। शरीरशरीरिणोर्भेददृष्टि सांख्ययोगयोरपि मोक्षं प्रेप्सवः साधकाः साभिनिवेशमभ्यस्यन्ति स्म। किन्तु

श्रुतीनां जगत्सृष्टिविषयिकाः पंक्तीः सन्दर्भेऽस्मिन् वेदान्तिन एव विशेषतः प्रयुयुजिरे। अन्वयव्यतिरेकाभ्यामात्मनोऽनुध्यानञ्चिकीर्ष्यते।

स्वः परश्चेति बुद्धिमसद्ग्राहं मन्वानः प्रह्लादो वेदान्तमतमाभीक्ष्ण्येन पुष्णातीति दिदर्शयिषुराचार्यह्वक्करः श्रीमद्भागवतस्य सप्तमस्कन्धस्थान् बहून् श्लोकान् निरदिक्षत्। एतेषु स्वीयपारक्यधीर्विमोहितधियामेव खलु न त्वन्येषाम्। पशुबुद्धिरेषा। स्वपरविभागमौढ्यादात्मा दुरत्ययानुक्रमणः। अहन्तायां ममतायाश्चासद्भावः कल्याणमिच्छता विदुषा देहादौ त्यक्तव्यः। मोहजोऽयम्। यथा ग्रावसु हेमकारो हेम तथैवाध्यात्मविद् विपश्चिद् ब्रह्मगतिं लभेत, अहन्तां ममतां सन्त्यज्य। भगवन्मायथैव गुणानां व्यतिकरः समुद्भूतः। आत्मपरबुद्धिस्त्वपार्था।

न केवलं भगवच्छ्लेषतैकरसात्मस्वरूपज्ञात्रा प्रह्लादेनैवात्मैक्यं प्रतिपादितं, भगवदौन्मुख्यानर्हेण हिरण्यकशिपुनाऽपि यन्निगदितमाश्वासनार्थं, तदनुसारमपि स्वीयपारक्ययोर्भेदोऽज्ञानविजृम्भित एव।

भागवतपुराणान्तर्गतायां प्रह्लादकथायामद्वैतवेदान्तिभिरभ्युपगतास्तिस्रो मूलभ्रान्तयो वीक्ष्यन्ते। पद्मपादाचार्यस्य पञ्चपादिकायामिमा विवृताः। आचार्यह्वक्करस्तासां शङ्कराचार्यपद्मपादाचार्ययोरपेक्षया पुरातनत्वमभ्युपपादयंस्तासां प्रकारभेदं प्रह्लादस्य हिरण्यकशिपोश्च दार्शनिकोद्गारेषु अदिदर्शयिषत्।

आपाततो वीक्ष्यमाणा विप्रतिपत्तयोऽद्वैतवेदान्तिनामाम्नाये

मायावादं खलु नोत्क्षिपन्ति । किन्तु श्रीमद्भागवतपुराणान्तर्गतेषु प्रह्लादकथनेषु दार्ढ्येन दृश्यप्रपञ्चस्य मायिकतां साधयतां पदानामदर्शनं प्रत्यप्याचार्यहृक्करोऽनुसन्धातॄणामनवधानतां वर्जयति । जगतो गुणकर्मनिबन्धनताज्ञानमूलताऽपार्थता स्वभवता च सप्तमस्कन्धे प्रह्लादेन प्रत्यापादिषतेति तु स्पष्टम् । हिरण्य-कशिपुस्तु संसृतेर्मायामयत्वं विशदीकरोतितराम् । असुभृतां दैवेनैकत्र नीतानामुच्चावचकर्मभिरुन्नीतानां संवासो जगत्यस्मिन् प्रपायामिवेति प्रतिपाद्य आत्मा गुणान् विसृजन् माययाऽऽत्मनो लिङ्गं धत्तेऽलिङ्गोऽपि लिङ्गवान् भवति, अविकलोऽपि गुणै-र्भ्राम्यमाणो मनसि तत्साम्यं यातीति प्रतिपादयाञ्चक्रे ।

ननु दैत्याधिपतिरसावान्वीक्षिकीमभ्यास्यदिति मा भूच्छङ्का । भवसिन्धुपोते पुराणपुरुषे भक्तियोगं विदधत उरुगाय-स्यामुष्य कथां पुराणकारो महामुनिर्मोहमरौ मरीचिकावर्त्मनि दन्दह्यमानानां जडीकृतमतीनां शान्त्यर्थं जगाविति सर्वमनवद्यम् ।

# तृतीयं प्रवचनम्

संसृतेरपार्थता स्वप्नवत्ता च श्रीमद्भागवतपुराणे बहुधा व्यपदिश्येते। आपातरमणीयेषु भोगेषु कृतविस्रम्भा नानाभववीथिषु इतस्ततः पर्यटन्तो जीवा न कुत्रापि शमं निर्वृतिं वा ऋच्छन्ति। ऐहिकामुष्मिककामलम्पटाः फल्गुना कर्मणा कृष्यमाणा असुभृतो वृजिनावहेषु मायागुणेषु नरीनृत्यन्ते। परमतवेदान्तसिद्धान्ते चराचरस्य स्वप्नवत्ता यादृशी व्यपदिष्टा तादृशी महापुराणेऽस्मिन् नो वीक्ष्यत इत्याचार्यहक्करः संकेतयति। सप्तमस्कन्धे क्रतुभिः कृतानां लोकानां क्षयिष्णुता प्रतिपाद्यते। क्षणभंगुरायुषः कामाः कथं जीवात्मनां शं वितन्वीरन्। आचार्यहक्करः सन्दर्भेऽस्मिन् सप्तमस्कन्धस्य सप्तमाध्यायस्य पञ्चचत्वारिंशत्तमं श्लोकं निर्दिशति यत्र पदार्थानां तुच्छता नश्वरताऽनर्थता चोदीर्यन्ते। स्पष्टत एव गौडपादस्य माण्डूक्यकारिकायां शांकर-

कृतिषु वा त्रैलोक्यस्य सारशून्यतामधिकृत्य ग्रन्थकृद्भ्यां यन्मत-माशिश्रिये तस्य पुराणेऽस्मिन्नदर्शनम् ।

सर्वभूतगुहाशयस्यानुरक्तेर्महिम्नो दग्धकर्ममलाशयस्य दैत्य-कुलसञ्जातत्वेऽपि मंगलायनस्य प्रह्लादस्यामंगलायनाय पित्रे हिरण्यकशिपवे तत्त्वानुचिन्तनस्य कतमा सरणी रुरुच इति प्रश्न-मपि श्रीमद्भागवतपुराणस्य तत्त्वदर्शनानुसन्धित्सवो नार्हन्त्यु-पेक्षितुम् । असौ दानव आसीत्, सहस्रकृत्वो विकर्माणि आचचार, परं हिरण्याक्षस्य असुप्रयाणानन्तरं खिद्यतां रुदतामाश्वासार्थं यदूचिवाँस्तत्तस्य मौढ्यं प्रत्याख्याति । प्रत्यगात्मनि भगवति बद्धवैरोऽपि क्षोणीमहरहस्तदयन्नपि दितिजानामात्मप्रज्ञप्तयेऽसौ यन्निजगाद तत्र मायावादो खलु विजृम्भते । वासुदेवाय सर्वं विनिवेद्य संसृते: परमं पारमारुरुक्षुणा प्रह्लादेन जगज्जालमधिकृत्य यदूचे हिरण्यकशिपोर्व्याहारे तदपेक्षया जगतो मायिकता विशदीभवतितरामिति आचार्यशङ्करस्य मतम् ।

हिरण्यकशिपु: परमतत्त्वं सर्वगमव्ययञ्च विवृणोति । प्रचलताऽम्भसा द्रुमा अचला अपि चला: प्रतीयन्ते; भ्राम्यमाणेन चक्षुषा भूरपि चलतीव वीक्ष्यते । आश्वासनार्थं पुरातनमिति-हासमुदाहृत्य ईशस्य महिमानं दर्शयाञ्चक्रे । स्वेच्छयैव सोऽव्यय: सृजति, रक्षत्यव लुम्पते च । निग्रहसङ्ग्रहे स प्रभु: । दिष्टरक्षितं रक्ष्यते, तद्विहतं विनश्यति । तदीक्षितोऽनाथोऽप्यरण्ये जीवति । त्रिचत्वारिंशत्तम: श्लोको हिरण्यकशिपोस्तत्त्वदर्शनाधिगमार्थमुप-

युज्यतेतमाम् । वह्निर्दारुषु भिन्नतामीयते, देहगतोऽनिलोऽपि भिन्नतामुपयाति । सर्वगतं नभः कुत्र सज्जते ? एवमेव परात्पर-पुरुषस्य सर्वगुणाश्रयत्वं तत्त्वान्वेषी विजानीयात् । प्राणदेहयो-रात्माऽन्यः। विभुर्भूतेन्द्रियमनोलिङ्गान्युच्चावचानि वपूंषि स्वेन तेजसा भजत्युत्सृजति च । लिंगान्वितत्वमेव कर्मबन्धहेतुर्भवति । तत एव विपर्ययः । विपर्ययस्य पातञ्जलपरिभाषाऽत्र मनसि निधा-तव्या विपर्ययो मिथ्याज्ञानमतद्रूपमिति । प्रेतवधूनां परिदेवि-तमाकर्ण्य यमराजस्तेषां हितकाम्यया यदुपदिदेश तत्र सर्वमैन्द्रियकं मृषेति व्याहारे मायावादः किल विजृम्भते। यमराजस्य कथामुदाहृत्य हिरण्यकशिपुः स्वीयपारक्ययोर्भेदमेकषष्ठितमे श्लोके प्रत्यादिशतीति प्रेक्षावद्भिर्नो विस्मर्त्तव्यम्।

अकुण्ठधिष्ण्यमेव दैत्यराजोऽयं बभाज, वैरभावेनेति केचित्। स्वपादमूलोपसर्पितानां शममीप्सतो भगवतोऽपरभक्ति-योगसाधनेऽसामर्थ्यात्। स्वसंस्काराणां तमोवृद्धिमभिवीक्ष्य च।

भवतु तावत्। हिरण्यकशिपोः स्तुतिरपि विचारमर्हति। वल्मीकतृणकीचकैराच्छन्नस्य तपसा प्रीतो हंसबाहो भगवानात्म-भूस्तमुपकर्त्तुं समायाति । स्तुत्यनुसारं स स्वयंज्योतिः स्वरोचिषा जगदभिव्यानक् । आद्यो बीजोऽयं ज्ञानविज्ञानस्य मूर्तिः। आत्मवतां स आत्मा आदिरहितोऽनन्तपारः कविश्च । कूटस्थः स परमेष्ठी । अजन्मा । ततः परं किञ्चिन्नास्ति । अनेजदेजच्च किञ्चिदपि तन्नातिरिच्यते। सर्वा विद्याः कलाश्च तस्य तनवः । बृहत्त्रिपृष्ठो हिरण्यगर्भः सः । पुराणः पुरुषश्च । अखिलं तेनैव ततञ्चिदचिच्छक्तियुतेन ।

ननु श्रीमद्भागवतपुराणकारस्य प्रयोजनं किं तत्त्वमीमांसाऽसीत्? मैवम्। ललितशैल्या वासुदेवाभिधेयस्य प्रभोर्भक्तिपथं दर्शयितुं विहितोऽयं प्रयासः। कर्मवशान्नवं नवं कलेवरमुपाददानास्तृष्णातमोभिर्निरुद्धदृशः कथं मोक्षाभिधमग्र्यं पुमर्थमृच्छेयुरित्यनुसन्दधता ग्रन्थकर्त्रा ग्रन्थोऽयं प्रणिन्ये। चेतसः सर्ववृत्तिप्रत्यस्तमये समाधिप्रज्ञाप्रतिलम्भे प्रक्षीणमोहावरणे यदनुभूयते तत्तीव्रेण भक्तियोगेनाप्यञ्जसा गम्यते। भक्तिपथे ज्ञानपथवन्मायाया अद्वैतस्य च भावो न तावद् द्रढयितुं शक्यते। स्वां स्वां प्रकृतिमनुसरद्भिर्निर्वेदमासाद्य भक्तेर्ज्ञानस्य वा पन्था गृह्यते। श्रीमद्भागवतपुराणे ज्ञानचर्चा भक्तियोगस्य खलु द्वारीभवति। इतस्ततो भक्तिज्ञाने परस्परानुग्रहतन्त्रीभवतः। चिकीर्षितमेकमेव। तदस्ति भगवन्तं जिगमिषूणां चेतसि वासुदेवस्य भक्तेरुद्रेकः। अतः शाङ्करग्रन्थेषु च व्यावृतस्य निर्विशेषाद्वैतस्य श्रीमद्भागवतपुराणेऽदर्शनमुपपन्नम्।

आचार्यहक्करस्य मतानुसारं पुराणमिदमद्वैतवेदान्तस्य प्रगेतनं रूपं खलु प्रस्तौति। अध्यात्मरामायणमपि भक्तिपरको ग्रन्थः। प्रथमकाण्डे वीक्ष्यमाणं रामहृदयमद्वैतमतं दार्ढ्येन पुष्णाति। द्वयोरेव ग्रन्थयोः प्रतिपाद्यं भक्तिरस्ति द्वयोरेव दर्शनमद्वैतवेदान्तमेव समुपबृंहयति। आचार्यहक्करस्य दृष्टौ रामहृदयस्य पदप्रयोगेषु श्रीमद्भागवतपुराणान्तर्गतानां पदानामपेक्षयाऽद्वैतस्य प्रतिपादनेऽधिकं परिष्करणं स्पष्टता

च विद्येते । अध्यात्मरामायणे वेदान्तमधिकृत्य यानि पदानि प्रयुयुजिरे तानि अद्वैतवेदान्तविचारणायाः प्रौढं विकसनमभिसूचयन्ति । अतः श्रीमद्भागवतस्य अध्यात्मरामायणप्रणयनाद् भूतपूर्वतामसावनुमेने ।

पुराणेऽस्मिन् न केवलं प्रह्लादकथायामेव, बहुषु स्थलेषु तत्त्वस्य मीमांसा किल वीक्ष्यते। सर्वेषामनुशीलनमन्तरा किञ्चिदपि विस्पष्टतया निर्णेतुं न शक्यम्। पुराणमिदं मनःसम्प्रसादनार्थं मरौ कृतोदकधियां प्रबोधनार्थं प्रशस्यमित्यत्र विसंम्वादस्यानवसरः। अहैतुक्याऽप्रतिहतया ज्ञानवैराग्ययुक्तया भक्त्या खल्वात्मा सम्प्रसीदतीति प्रतिपादयत् पुराणमिदं न केवलं सरसहृदयैर्भक्तियोगिभिरेव, संख्यावद्भिरपि समाद्रियतेतमाम्। ज्ञानवैराग्यभक्तिपरकास्तस्य श्लोकाः कस्य प्रेक्षावतश्चेतो नावर्जयन्ति! उक्तञ्च,

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्।
भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम्॥

## चतुर्थं प्रवचनम्

श्रद्दधानानां मोहमहार्णवतितीर्षूणां वेदान्तविज्ञाननौस्थानां कृते तु शाङ्करग्रन्थानां पौर्वापर्यविमर्शनमपार्थकमेव। मरीचिकायामुदकस्फुरणं यथा कस्यचिदपि हिताय न भवति तथैवापगतसाधनसम्पद्ग्रन्थाधीतिरपि, वर्षसहस्रेणापि केवलमुपपत्त्या परात्मज्ञानावाप्तेरशक्यत्वात्। तज्ज्ञैः पदवाक्यप्रमाणज्ञैरमोघदृग्भिर्निर्व्यलीकेन मनसा श्रद्धावतां मुमुक्षूणामज्ञानहानाय यदुक्तमस्ति तस्यानिशं पठनश्रवणमनननिदिध्यासनानि कुर्वाणास्त्यक्तलोकैषणाः परावरेशपादपद्मविनिवेदितमनस्का दैह्यमस्तित्वं विस्मरन्तः सन्तो भवाब्धिं तरीतुं मनोनिरासं विधाय चिकीर्षितमात्मप्रसादमधिगच्छन्ति। तथापि दर्शनग्रन्थानामैतिह्यपरिनिष्ठार्थं परिकल्पितानां गवेषणानां महत्त्वमुप-

योगिता च निराकर्त्तुं नो शक्येते। अव्यक्तरंहसा कालेन विस्मृतिमुपगतं ग्रन्थानां पौर्वापर्यविमर्शनमञ्जसोपयुज्यतेऽनेकहेतोः।

भगवतो भाष्यकारस्य ग्रन्थेषु विषयप्रतिपादनपरकं वैभिन्न्यमाकलय्याचार्यहक्करस्तेषां पौर्वापर्यं रूपयितुं यदनुसन्दधे तत् प्रतीच्यजगतो वेदान्तैतिह्यप्रणयिभिर्बहु मन्यत इत्यस्माद्धेतोर्मया विगतप्रवचनेऽनल्पसंख्यकभारतीयविदुषामध्ययनस्यैकायनीभूतान् शाङ्करग्रन्थानुद्दिश्य यन्निरदेशि तदेवाद्यतवे प्रवचने विस्तरिष्यते॥

अथोपदेशसाहस्र्याः पद्यप्रबन्धेऽन्तिमं प्रकरणं माण्डूक्यकारिकायाः माण्डूक्यभाष्यस्य च विचारपद्धतिं विशेषतोऽन्वहार्षीत्॥ योगसूत्रभाष्यविवरणवत् माण्डूक्यभाष्यवच्चात्रापि वेदान्तशास्त्रं चिकित्सारूपेण ग्रन्थकर्त्रा निरदेशीति पूर्वमेव निगदितम्॥

प्रायुङ्क्त तृष्णाज्वरनाशकारणं
चिकित्सितं ज्ञानविरागभेषजम्।
न याति कामज्वरसंनिपातजां
शरीरमालाशतयोगदुःखिताम्॥

तृष्णैवात्र ज्वरः। माण्डूक्यभाष्येऽविद्यया सह तृष्णापि दोष इत्युक्ता। अविद्यातृष्णादिदोषा इति। उपदेशसाहस्र्याः पद्यप्रबन्धस्यान्तिमे प्रकरणेऽस्मिन् दशमे श्लोके माण्डूक्यकारि-

कायाः प्रथिताऽलातचक्रोपमा वीक्ष्यते, माण्डूक्यकारिकायां यस्मिन्नर्थे गौडपादस्तां प्रयुयुजे तस्मिन्नेवार्थे। कारिकाकारस्य श्लोकोऽयं वेदान्तवीथिविहारपरायणानां सुविदितः। यथा जगत्यस्मिन् बहुरूपधरमृजुवक्रादिकाभासमलातस्पन्दितं, तथैवा-वस्तुयोगात् विज्ञानस्पन्दितं ग्रहणग्राहकाभासं भवति।

उपदेशसाहस्र्यां ग्रन्थकृताऽलातचक्रोपमैवमेव प्रायोजि।

विकल्पना वाऽपि तथाऽद्वया भवे-

दवस्तुयोगात्सदलातचक्रवत्।

न शक्तिभेदोऽस्ति यतो न चात्मनां

ततोऽद्वयत्वं श्रुतितोऽवसीयते ॥

नवमे श्लोके द्रष्टृदृश्यदर्शनानामविद्याकल्पितत्वं संसूच्यते। द्रष्टा, दृश्यं, दर्शनञ्च सर्वं भ्रम एव। तत्सर्वं मनुष्येण कल्पितदृशेभिन्नं दृश्यं कुत्रेक्षितुं शक्यते? तदनु अलात-चक्रोपमया ग्रन्थकृत् प्रतिपाद्यं विशदीकुरुते। इत्थं विकल्पनाऽप्यद्वया भवेत् कथम्? अवस्तुयोगात्। केन प्रकारेण? तदलातचक्रसदृशं ग्राह्यमिति। द्रष्टृदृश्यदर्शनानां इदमेव चित्रं माण्डूक्यभाष्येऽपि भाष्यकारोऽचिचित्रत्। अपरग्रन्थेष्वलात-चक्रस्योल्लेखोऽन्यस्मिन् सन्दर्भे विधीयते। अमं प्रणयनं परवर्त्ति-कालिकं मन्तव्यमित्याचार्यहक्करस्य मतम्।

उपदेशसाहस्र्याः पद्यप्रबन्धेऽन्तिमे प्रकरणे जगतो मिथ्या-त्वदर्शनार्थं विकल्पौ विकल्पना चेति पदे बहुधा प्रायोजिषाताम्।

क्लृपो णिजन्तरूपमपि सोपसर्गमनुपसर्गं वा। अपरशाङ्करग्रन्थेषु पदानामेतेषां प्रयोगः कादाचित्क एव वीक्ष्यते; बहुधाविद्यादि-शब्दैः सह सामासिकः प्रयोगो विहितः। केवलं तैत्तिरीयभाष्ये विकल्प इति पदप्रयोगः क्लृप इति धातोः प्रयोगे पुष्कल-मकारि। मङ्गलाचरणश्लोकादस्याद्यत्वमाचार्यहक्करेण पूर्वमेवौहि। माण्डूक्यकारिकाया एकत्ववादप्रतिपादनार्थमुपस्थापित-स्यास्तित्वविषयकतर्कस्य शङ्कराचार्यस्यापरग्रन्थेष्वदर्शनमुप-देशसाहस्र्याः पद्यप्रबन्धे पुनरपि प्राकट्यं किं द्योतयति? परावरेशस्याकल्पितत्वमजत्वमद्वयत्वमक्षरत्वमेव ध्येयम् तत्र स्वचेतसो मायया प्रभवं भवं विकल्पयन्तो नराः सन्ततं जरां च मरणं च नियान्तीति प्रतिपाद्य माडूक्यकारिकायास्तर्कः खलूपन्यस्यते—

भवाभवत्वं तु न चेदवस्थिति
नंचास्य चान्यस्थितिजन्मनान्यथा।
सतो ह्यसत्त्वादसतश्च सत्त्वतो
न च क्रियाकारकमित्यतोऽप्यजः॥
अकुर्वदिष्टं यदि वाऽस्य कारक
न किञ्चिदन्यन्ननु नास्त्यकारकम्।
सतोऽविशेषादसतश्च सच्च्युतौ
तुलान्तयोर्यद्वदनिश्चयान्नहि ॥

अजमिति पदं माण्डूक्यकारिकायां द्वात्रिंशद्वारं प्रयुक्तम्।

तैत्तिरीयभाष्येऽपि तर्कोऽयं वीक्ष्यते । नह्यन्यस्यान्यभावापत्तिरुपपद्यत इति । अत्र माण्डूक्यकारिकयाः श्लोका नो विस्मर्त्तव्या यत्र प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यतीति पंक्तिस्त्रिवारं दृक्पथे समायाति । तृतीयाध्यायस्योनर्विंशतितमे श्लोकेऽमृतं मर्त्यं न भवति, तथैव मर्त्यस्य मृतत्वमित्युपपाद्य, चतुर्थाध्यायस्योनत्रिंशत्तमे श्लोकेऽजातं जायत इति मतस्य निःसारतां दिदृक्षता परात्परस्याजातिः प्रकृतिरिति निर्दिशता ग्रन्थकृता सैव पंक्तिर्मुमुक्षोर्धारणादृढीकरणार्थं पुनरावृत्यते । सप्तमश्लोकस्तु तृतीयाध्यायस्य श्लोकसदृशः ।

गौडपादाच्छांकरमतमारभ्यते किल, परं कालं प्राप्य शाङ्करदृष्टिः स्वातन्त्र्यमधिजगाम । विकल्प इति पदस्य प्रयोगस्त्यक्तः, अद्वयत्वसाधनार्थं गौडपादीयस्य तर्कस्य स्थानेऽन्या तर्कपद्धतिरवलम्ब्यते । द्रष्टृदृश्यसम्बन्धपरिकल्पनाविषयकं प्रतिपादनवैभिन्न्यमपि सन्दर्भेऽस्मिन्नो विस्मर्त्तव्यम् । आचार्यहक्करस्त्वत्रापि तैत्तिरीयभाष्यस्याद्यत्वं पश्यति, यतो ह्यस्मिन् भाष्यकारो माण्डूक्यभाष्यस्य गौडपादस्य च चिन्तनपद्धतिमनुशिश्रिये । भाष्यस्यास्य शाङ्करग्रन्थानां पौर्वापर्यविमर्शनार्थं विशिष्टं महत्त्वं विद्यते । परवर्त्तिकालस्य चिन्तनपद्धतेराभासोऽत्रावलोक्यते । संक्रमणकालस्य खलु रचनेयम् ।

ननु बहुशो दृष्टृदृश्यसम्बन्धविवेचनाऽनन्तस्वरूपज्ञाने-नानुस्यूता निभाल्यते । दृष्टृदृश्ययोः स्थाने विषयविषयिणो-

ग्राह्यग्राहकयोरपि व्यवहारो बोभूयते स्म। ग्राह्यग्राहकयोः प्रयोगो वेदान्तग्रन्थेषु बौद्धग्रन्थेभ्य आगत इत्याचार्यहक्करः शङ्कते। विषयविषयिणोः प्रयोगो योगशास्त्रे बभूव। योगभाष्ये द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थमिति सूत्रं व्याख्यास्यन् महर्षिव्यासो विषयस्य विषयिणश्च प्रयोगं व्यदधात्। 'तत्स्वयं च विषयत्वाद्विषयिणा पुरुषेणाऽऽत्मीयया वृत्त्याऽभिसम्बद्धम्। तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यत इति। ग्रहीतृग्रहणग्राह्याणां प्रयोगं तस्मिन्नेव सूत्रभाष्ये बौद्धदार्शनिकानामनुकम्पनीयत्र चित्तस्य सर्वरूपाकारनिर्भासं भ्रान्तिबीजत्वञ्च दर्शयित्वा भाष्यकारो व्यवधात्। 'एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतज्जातितः प्रविभज्यते ते सम्यग्दर्शिनस्तैरधिगतः पुरुषः' इति।

मनसो विज्ञानस्य चित्तस्य वा स्पन्दनमेव जगत्। माण्डूक्यकारिकानुसारं ग्राह्यग्राहकवदिदं द्वयं चित्तस्य स्पन्दितमेव। सवस्तु सोपलम्भञ्च द्वयं लौकिकमवस्त्वनुपलम्भञ्च लोकोत्तरमिति। अथ द्वयाद्वययोर्द्वैताद्वैतयोरर्थं आचार्यहक्करानुसारं गौडपादस्य कृतितः सुगमतयाऽवगम्यते, नतु शाङ्करकृतिभ्यः कारिकाकारस्य मते द्वयमिदं चेतसः स्पन्दितम्, ग्राह्यग्राहकरूपम्। दृष्टृदृश्ययोर्विषयविषयिणोर्वा भेदप्रहाणात्परमार्थावाप्तिः

परमार्थोऽयमतोऽद्वयमद्वैतं वा वर्णयितुं पार्यते । शाङ्करक्तौ कालं प्राप्य द्रष्टृदृश्ययोर्या व्याख्योपचक्रमे, तत्र द्वैतभावस्यास्य एवार्थः । द्वैतं तत्र जगतः प्रपञ्चस्य वा पर्यायरूपेण निष्पद्यते । अद्वैत-वादस्य स्थाने आचार्यहक्करस्यानुशीलनानुसारमैकात्म्यवाद इत्यभिधानं शाङ्करसिद्धान्तायोपपद्यतेतराम् ।

## पञ्चमं प्रवचनम्

परावरस्य परमपुरुषस्य लक्षणाभिधित्सया बहवो मुनयस्तं हेयोपादेयविरहितं सच्चिदानन्द इत्यूचिरे। याथातथ्येन ग्रहणाभावान्नेति नेतीति वर्णनमपि चिदेकरसप्रविलीनमानसैस्तत्त्वदर्शिभिरकारि। ब्रह्मण आनन्दरूपतेयं शाङ्करकृतिषु यस्मिन् रूपे वीक्ष्यते तद् गवेषकैर्मनसि निधातव्यम्। आपवर्ग्यं धर्म्यं पन्थानं दिदर्शयिषुणा महापुरुषेणामुनाऽनन्दतत्त्वं सर्वत्र नो प्रत्यपादि।

स्पन्दितायासोपशमे सुषुप्तौ जीवोऽयमानन्दमयो भवति। परमार्थतस्तु चित्तमात्मैव। द्रष्टृदृश्यभेदावसानादानन्दस्वरूपत्वमवाप्यते। माण्डूक्यकारिकायां ब्रह्मभावापत्तिं वर्णयतो गौडपादस्य शब्दान् विपश्चितः सन्दर्भेऽस्मिन्ननुशीलयेयुः। यदा चित्तं

न लीयते, न च पुनः विक्षिप्यते, यदेदमनिङ्गनं सञ्जायते, अनाभासत्वञ्च सम्पद्यते, तदैव ब्रह्मणो निष्पत्तिर्भवति। उत्तममिदं सुखमकथ्यमस्ति, सनिर्वाणमस्ति, सर्वज्ञमस्ति, अजमस्ति। भाष्ये भगवान् भाष्यकारः सुखमिदं योगिप्रत्यक्ष-मेवेत्यसुसूचत्।

तैत्तिरीयोपनिषदि ब्रह्मण आनन्दरूपता सोत्साहमृषिभि-र्दर्शयाञ्चक्र इति विदुषां विदितमेव। आचार्यहक्करस्य दृष्टावुपनिषदोऽस्याः शाङ्करभाष्यं ग्रन्थकर्तुः कृतीनां पौर्वापर्य-विमर्शनार्थमञ्जसोपयुज्यते। भूरिवर्ष्मणः प्राच्यदर्शनस्य पौर्वा-पर्यविमर्शस्यासौकर्यं कृच्छ्रसाध्यत्वञ्च कः खलु सुधीः प्रत्या-ख्यास्यति।

माण्डूक्योपनिषदि सुषुप्तिकालिकमानन्दं वर्णयता श्रुति-कारेण आनन्दमय इति पदं प्रयुयुजे। अत्र आनन्दमय इति पदं व्याचिख्यासुर्भाष्यकार आनन्दप्रायो नानन्द एवेति व्याख्यां चक्रे। आनन्दमयस्य स्पष्टीकरणमिदं पुरातनवेदान्तपरम्परा-मनुसरति। ब्रह्मसूत्रेऽपि सूत्रितमस्ति—विकारशब्दान्नेति चेन्न, प्राचुर्यात्। आनन्दमय इति पदमानन्दप्रचुर इति पदान्नाति-भिन्नम्। किञ्च तैत्तिरीयोपनिषद आनन्दमय आनन्दप्रचुरो वाऽऽत्मवेदिनो ह्यानन्दमयस्य आत्मन एव विशेषणं प्रतिजज्ञिरे; शङ्कराचार्यस्तु माण्डूक्योपनिषद आनन्दमयमात्मानं तुरीया-वस्थामुपगतमिति वर्णयाञ्चक्रे। तैत्तिरीयोपनिषदो भाष्ये भाष्य-

कारः परम्परा किञ्चित्त्यक्त्वाऽन्यामेव विचारसरणिमधिशिश्रिय इत्याचार्यहक्करस्य मतम्। न केवलमत्रैव, अमुष्य विचारानुसारं ब्रह्मसूत्रभाष्येऽपि परम्परा निर्वाह्य भाष्यकारेण तैत्तिरीयोपनिषद्भाष्ये निर्दिष्टं स्वमतं प्रकटितम्। आनन्दमय इत्यत्र मयडिति प्रत्ययो विकारं द्योतयति। कार्यात्माऽसौ, न तु स्वयंज्योति। 'कार्यपतित एवानन्दमयो न पर एवात्मा, आनन्द इति विद्याकर्मणोः फलम्, तदविकारा आनन्दमया' इति। माण्डूक्यभाष्यतैत्तिरीयोपनिषद्भाष्यमत्र भिन्नम्। ब्रह्मसूत्रस्य भाष्यं तैत्तिरीयोपनिषद्भाष्यञ्च आनन्दमय इति पदव्याख्यानमधिकृत्य समाने।

तैत्तिरीयोपनिषदि यत्र ब्रह्मण आनन्द इति चर्च्यते, भाष्यकारो माण्डूक्यभाष्यादन्यग्रन्थेभ्यश्च कतिपयस्थलेषु भिन्ना विचारसरणि गृहीतवान्। यतो ह्यत्र विषयविषयिणो. प्रसङ्ग. समापद्यत। 'निरस्ते त्वविद्याकृते विषयविषयिविभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैतो भवति, स एष परमानन्दः स्वाभाविकोऽद्वैतत्वादानन्दानन्दिनोश्चाविभागोऽत्र।' किञ्च, 'अभिन्न· स्वाभाविक आनन्दः परमात्मैव न विषयविषयिसम्बन्धजनितः।' अपरञ्च, 'तं ब्रह्मण आनन्द···सर्वैषणाविनिर्मुक्तस्यात्मभूतं विषयविषयिसम्बन्धविनिर्मुक्तं स्वाभाविक नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान्···न विभेति कुतश्चन' इति।

आचार्यशङ्करस्य दृष्टावुपदेशसाहस्र्याः पद्यप्रबन्धः स्तुतिश्लोकाच्छाङ्करग्रन्थेषु प्राथमिकेषु मन्तुं शक्यते। तत्रापि श्लोकेऽस्मिन् श्रुतेरर्थो व्याहृतः—

यस्माद्भीताः परावर्त्तन्ते वाङ्मनःपावकादयः।
तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥

सप्तदशप्रकरणस्य श्लोकोऽयम्। तत्रैवान्यस्मिन् श्लोके आत्मा सच्चिन्मात्र इति निगद्यते, आनन्द इति पदं समुपेक्ष्य। एकादशप्रकरणे द्वादशप्रकरणे च एवमेवात्मस्वरूपं प्रतिज्ञातुं ग्रन्थकर्त्रा आनन्द इति पदमपोहितम्।

मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः।
सम्प्रसादे द्वयासत्त्वाच्चिन्मात्रः सर्वगोऽव्ययः ॥

तदनु प्रबोधात् स्वप्नो विविधव्यवहारहेतोः सत्योऽवभासते तथैवात्मवेदनात्प्राक् प्रत्यक्षादेर्जाग्रत्प्रमाणत्वमिति प्रतिपाद्य षष्ठे श्लोक आत्मनो भूतदोषविवर्जितत्वं विशदीकृत्य तस्य स्वरूपं निरदेक्षीत्—

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान्।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाद्वयः ॥

एवमेवोपदेशसाहस्र्याः पद्य प्रबन्धेऽचक्षुष्ट्वप्रकरणस्यारम्भेऽचक्षुष्ट्वादश्रोत्रत्वादवाक्त्वादमनस्त्वाद्दृष्टिश्रुतिवक्तिमतीनामनस्तित्वं निर्वर्ण्य द्वितीये श्लोके चिन्मात्रज्योतिरिति पदं प्रयुयुजे।

प्रायशः शङ्कराचार्य आत्मस्वरूपवर्णनार्थं चिन्मात्र इति

पदं व्यवाहार्षीत् । माण्डूक्यभाष्यं तैत्तिरीयभाष्यञ्च विहाय प्रवृत्तिरियमाद्यशङ्कराचार्यस्य कृतिषु दरीदृश्यते । सर्वेषा शाङ्करग्रन्थाना वेदान्तविज्ञानं रिरक्षिषोरीड्यकर्मण आद्य-शङ्करस्य कृतीनामन्तःपातित्वं न सङ्गच्छत इत्यनवद्यम् ।

आत्मनः सदादिशब्दवाच्यत्वमपि भगवान् भाष्यकारो नाचीकमत । कुत इति चेत्तत्रोक्तं भगवद्गीताभाष्ये—'न तु ब्रह्म जातिमत्, अतो न सदादिशब्दवाच्यम् ।' तत्रैव द्वितीया-ध्यायस्य षोडशं श्लोकं व्याख्यास्यमानोऽसौ सदिति पदमित्थ निरूपयाञ्चक्रे—यद्विषया बुद्धिर्न व्यभिचरति तत्सत् । ईशोपनिषद्भाष्ये सदिति पदं सर्वा हि कार्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीति व्याख्यात-वान् । अध्यात्मपटलविवरणे न हि ब्रह्मणोऽभिव्यक्तिनिमित्तत्व-व्यतिरेकेण कस्यचिदाधारत्वसम्भव इति शब्दैर्ब्रह्मणः स्वरूपं प्रत्यपादि । न केवलमानन्दरूपतामेवाधिकृत्य ब्रह्मणः स्वरूप-द्योतकं सदिति पदं प्रत्यपि तावच्छङ्करस्य महामतेर्धीर्न उदसहिष्ट इति किं निर्हेतुकम् ? मैवम् । आचार्यहक्करस्य मते भाष्यकारस्य प्राक्कालिकादयोगमतावलम्बित्वात् । पातञ्जल-योगसूत्रस्यान्तिम सूत्रं पुरुषार्थशून्याना गुणाना प्रतिप्रसव. कैवल्य स्वरूपप्रतिष्ठा वा चितिशक्तिरित्यत्रासौ निर्दिशति ।

ब्रह्मणः सत्स्वरूपतामानन्दस्वरूपताञ्च समुपेक्ष्य भगवता भाष्यकारेण तस्य चिन्मात्रतैव अञ्जसा निर्दिदिशे । सहेतुक-

मिदम्। आनन्दरूपतान्त्वसौ समुपेक्षतेतराम्। परावरस्य ऐक्यमुद्दिश्य तत्त्वार्थिनो न मुह्येयुरिति हेतोः। वृहदारण्यकोपनिषदो विज्ञानमानन्दं व्रह्म इत्यस्य व्याख्याने भगवान् भाष्यकार आनन्द इति पदं स्पष्टीकुर्वन् स्वमतं प्रख्यापयाञ्चक्रे—न विषयविज्ञानवद् दु:खानुविद्धं किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमिति। आनन्दानुभूतिं प्रत्यादिशता तदनु तर्क्यते—जलाशय इवोदकाञ्जलिः क्षिप्तो न पृथक्त्वेन व्यवतिष्ठते आनन्दात्मकव्रह्मविज्ञानाय। तदा मुक्त आनन्दात्मककमात्मानं वेदयते इत्येतदनर्थकं वाक्यमिति। स्वानन्दं व्रह्मानुभवतीत्यपि खलु निगदितुं नो शक्यते। तत्रैव पुनरपि प्रतिपाद्यमसंव्यवहितं विशदीक्रियते—व्रह्मणश्च निरन्तरात्मानन्दविज्ञाने विज्ञानाविज्ञानकल्पनानर्थक्यम्। निरन्तरचेदात्मानन्दविषयं व्रह्मणो विज्ञानं, तदेव तस्य स्वभाव इत्यात्मानन्दं विजानातीति कल्पनानुपपन्नेति।

ननु अननुभूतमरणधर्मकस्य धाम्ना स्वेन सदा निरस्तकुहकस्य तस्य स्वरूपाभ्युपपत्तिर्नेतिनेतीतिशब्दैरेव। भाष्यकारस्य कृतिषु यल्लभ्यते तत् काव्यशास्त्रविनोदेन कालो गच्छति धीमतामिति नीतिशास्त्रोपदेशानुसारि। ऋषिभिर्दर्शनिकैर्वाऽऽम्नातं मतं धिषणां खलु प्रेरयति।

## षष्ठं प्रवचनम्

सांख्यशास्त्रस्य महत्त्वमविसंवादितं, शास्त्रस्य पुरातनत्वाद् दुःखत्रयाभिघाताच्च सांख्यपदं महाभारते पुराणादिषु च बहुत्र व्यवहृतम्। भगवतो गीतायान्तु सांख्ययोगयोः समानफलत्वं स्पष्टीकृतम्। बाला एव सांख्ययोगौ पृथगिति प्रवदन्ति; यः सांख्यं योगं चैकं पश्यति स पश्यति; यत्स्थानं सांख्यैः प्राप्यते तद् योगेनाप्यधिगम्यते' इति ब्रुवता भगवता वासुदेवेन सांख्य-साधनपद्धतेर्गौरवं व्याहृतम्। पञ्चविंशतितत्त्वज्ञस्य मोक्षस्या-परिहार्यत्वमुद्दिश्य कथितमस्ति—स यत्र कुत्राश्रमे रतोऽपि जटी मुण्डी शिखी वापि मुच्यते। शास्त्रस्यास्य समुद्भवः कुत्र जातो भारतवर्षस्य कस्मिन् जनपदे? अस्य प्रथमोपदेष्टा को बभूव? कपिलासुरिपञ्चशिखादीनां सांख्योपदेष्टृणां कालः

कतमः ? तानुद्दिश्य प्रचलितानां जनश्रुतीनामैतिहासिकत्वं कियत् ? एवंभूतानां प्रश्नानां समुद्भवोऽनुसन्धातॄणां चेतसि स्वाभाविकः। ऊनविंशतिशतक एव शर्मण्यदेशीयो विपश्चिद् गार्वेः सांख्यशास्त्रपरकान् निबन्धान् विरचय्येत्थंभूतान् बहुविध-प्रश्नानुत्तरितुञ्चिचेष्टे। तस्य निष्कर्षाणां दोषावहत्वं गुर्वर्थञ्चोद्दिश्य परवर्त्तिगवेषकैरपि निबन्धा अलेखिषत। सांख्यमतं ब्राह्मणमब्राह्मणं वेति समस्यापि समुत्थापिता।

सांख्यमतोत्पत्तिर्बौद्धमतात्प्राक्तनेत्यत्र संशयावकाशो नास्ति। बहवो विद्वांसः सांख्ययोगेभ्यो बौद्धदर्शनोत्पत्तिसिद्धान्तमपि स्वीकुर्वन्ति। सन्दर्भेऽस्मिन् शर्मण्यदेशीयविदुषो याकोबेः सांख्ययोगेभ्यो बौद्धमतोद्भव इति निबन्धो द्रष्टव्यः। ऊनविंशतिशतकस्यान्तिमचरणे निबन्धोऽयं प्रकाशतामाप। द्वयोर्बहुविधसाम्यमवलोक्य गार्बेरपि बौद्धमतस्य सैद्धान्तिकस्वरूपोद्भवहेतुं सांख्यमते स्थापयति। परम्परागतमान्यतेयं स्वीकार्या। आरम्भिकश्रुतिषु सांख्यमतस्यादर्शनं निभाल्य गार्बेस्तस्य पश्चाद्भूतत्वसिद्धान्तमङ्गीकरोति। पुरातनश्रुतीनां सर्वात्मैक्यसिद्धान्तपरिहारार्थं सांख्यशास्त्रं प्रादुर्बभूवेति तस्य मतम्। एको देवः सर्वभूतेषु गूढोऽस्ति, स सर्वव्यापी, सर्वभूतान्तरात्मा विद्यत इत्युपदेशनिराकृतेरात्मबहुत्वस्यात्मनः प्रतिदेहभिन्नत्वस्य सिद्धान्तस्थापनार्थं यः प्रयासो बभूव स एव सांख्याख्यः।

मोक्षमूलमतन्तु भिन्नम्। नीलकण्ठशास्त्रिमहोदयवत्

श्रुतीनामुपदेशानां संख्यानं ज्ञानिभिरकारि। संख्यानेऽस्मिन् विशिष्टशैली प्रयुक्ता। अभिव्यक्तेरभिनवः प्रयोगो विहितः॥ कालक्रमादर्थो विस्मृतः। नवा व्याख्याः प्रादुर्भूता अभिनवार्थ-संयुक्ताः। अर्थपरिवर्त्तनादस्मात् सांख्यमतं प्रकटितम्। सुसम्बद्ध-शास्त्ररूपन्तु विलम्बेनैव प्राप्तम्।

श्वेताश्वतरश्रुतिस्त्वत्र स्मर्तव्या। भगवद्गीताऽपि॥ द्वयोरेव वेदान्तोपदेशः सांख्योपदेशश्च दरीदृश्येते। अत्र प्राचीन-श्रुतीनामेव सिद्धान्ताः सन्ति। ब्रह्मात्मैक्यञ्जगतश्च माया-मयत्वम्।

दैवी ह्येषा गुणमयी मम माया दुरत्ययेति।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति।

गार्बेरत्र भिन्नदृष्टिः। वैदिकसंहितासु, ब्राह्मणेषु, आरण्य-केषु, प्राक्तनोपनिषत्सु वा सांख्यदर्शनस्य विशिष्टसिद्धान्ताना मस्य दृष्टावदर्शनमेव। कठमैत्रीश्वेताश्वतरप्रश्नगर्भचूलिका-दिषु सांख्यसिद्धान्ताः प्रस्फुटिताः। सांख्यशास्त्रसमुद्भवात्पश्चा-दिमाः श्रुतयः प्रादुर्बभूवुरिति निष्कर्षोऽप्यबुद्धिसंमतः। विभिन्न-स्तरीयाः सांख्योपदेशाः विभिन्नाः सांख्यसंज्ञा दीर्घकालं यावद्भारतीयब्राह्मणानां बौद्धिकस्वत्वरूपेण तस्थुः। विलम्बा देव निश्चितमतस्य पल्लवनं संबभूव। अत्र याकोबेर्मतर्मपि द्रष्टव्यम्। गार्बेस्तु सांख्यदर्शननिर्मितेः प्रागेव ब्राह्मणानां साहित्ये

सांख्यमतस्य सम्यग्रूपावस्थितिं लेभे। सिद्धान्तस्यैक्यमिदं व्यक्तिविशेषस्य मेधायां समुत्पन्नं, न तु क्रमशः।

श्रुतिषु यत्र सांख्यमतं निभाल्यते, तत्रेदं सांख्यदर्शन-प्रतिपादकरूपं नाङ्गीकुरुते। अंशत एवेदं, वेदान्तसिद्धान्त-समन्वयार्थमेव। श्रुतिष्वासु यत्सांख्यं दृश्यते, तस्य पश्चाद्-वर्तिनां ग्रन्थानां सांख्यदर्शनेन साम्यं नास्ति। मैत्र्युपनिषदः षष्ठाध्यायस्य दशमश्लोकादिदं स्पष्टीभवति।

समग्रसंस्कृतवाङ्मये सांख्यशास्त्रप्रणेतृरूपेण महर्षिः कपिलः स्मर्यते। क आसीदसौ महामनाः? महाभारते रामा-यणे पुराणेषु च बहुधा कपिलसंज्ञकस्य ऋषेर्वर्णनं लभ्यते। मोक्षमूलरस्तु कपिलस्यैतिहासिकतां प्रति सन्दिहान आसीत्। भारतीयपरम्परायां महर्षिरसौ सदैव सांख्यदर्शनोद्भावकरूपेण निगदितः। गार्बेरपि परम्परागतां मान्यतामिमां न विरुणद्धि। सनकः सनन्दनः सनातनः आसुरिः कपिलो वोढुः पञ्चशिख-श्चेति ब्रह्मणः पुत्राः सप्त महर्षयो निगदिताः। गौडपादः स्वभाष्ये कपिलस्य सांख्यशास्त्रोपदेष्टृत्वं वर्णयति। कपिलस्य सहोत्पन्नानि धर्मो ज्ञानं वैराग्यमैश्वर्यञ्च। ऐश्वर्यपदप्रयोगोऽयं किं निर्दिशति? धर्मज्ञानवैराग्याणामवस्थितिस्तु स्वाभाविकी। आसुरिः कपिलस्य सगोत्रो ब्राह्मणः। तस्मै जिज्ञासमानाय कपिलो दुःखापनोदकं ज्ञानमुवाच। अन्धे तमसि मज्जज्जगदव-लोक्य संसारपारम्पर्येण सत्कारुण्य इति कपिलार्थं शब्दान्

व्यवहृत्य ग्रन्थकारो महर्षेर्महिमानं स्पष्टीकुरुते। असावेव परमर्षिः सांख्यसूत्राणि प्रणिनायेति प्राचां मतं पाश्चात्यदेशीयाः संस्कृतज्ञाः नाद्रियन्ते। महाभारते मोक्षधर्मेषु कपिलासुरिपञ्च-शिखानां यानि मतानि वर्णितानि तानि परिणतसांख्यदर्शन-प्रक्रियाया बहुष्वंशेषु भिन्नानि। सांख्यसप्तति-हिरण्यसप्तति-कनकसप्तति-सुवर्णसप्ततीत्यपरनामधेयायाः सांख्यकारिकायाः माठरवृत्तौ परमर्षिः कपिल आरम्भे वर्ण्यते। असौ भगवान् महर्षिः सांसिद्धिकधर्मज्ञानवैराग्यैश्वर्यसम्पन्न आसीत्। भगवतः पुराणपुरुषस्यावतारश्च। अवतरणस्य हेतुरासीज्जगदनुजिघृक्षा न तु कर्मफलभोगो वासनाविजृम्भितः। दुश्चिकित्स्यस्य संसार-व्याधेरपनोदनार्थं सम्यगौषधेनेव अविद्यातिमिरविनाशकप्रदीपे-नावबोधेन स सम्पन्न आसीत्। दुःखाकुलं जगदवलोक्य परमर्षे-रस्य कारुण्यमुदपादि। तदनु महायोगी मनसि चिन्तामापेदे। कथमस्य वराकस्यान्धे तमसि वर्तमानस्य जगत उद्धारः कार्यः। आसुरिं प्रति ब्रह्मोपदेशविद्यया अतन्द्रितो भूत्वा वाचमित्युवाच—भो भो आसुरे ३ रमसे गृहस्थधर्मेण। स तमुवाच—रमे भोः। स एवमुक्तो मुनिरीषन्निष्पन्नविवेकवैराग्योऽयमिति व्यवस्य निर्गम्य भूयोऽपि द्वितीये वर्षसहस्रे पूर्णे प्रत्यागत्य तथैवाभ्युवाच—भो भो आसुरे ३ रमसे गृहस्थधर्मेण। स तमुवाच—रमे भोः। अथासौ महायोगीन्द्रस्तथैव निर्गम्य तृतीये वर्षसहस्रे सम्पूर्णे अभ्येत्योवाच—भो भो आसुरे ३ रमसे गृहस्थधर्मेण। स तमु-

वाच– न रमे भोः। अथ स भगवतोक्तः कथम्? पुनराह आसुरिः– दुःखत्रयाभिघातात्। इत्थं सांख्यदर्शनस्योत्पत्तिहेतुर्दर्शितः।

बौद्धसाहित्ये कपिलः कपिलवस्तुना सम्बद्धः। सम्बन्धोऽयं किं निरर्थकः? नैव। बौद्धमते साख्यसिद्धान्तबाहुल्यमस्य सार्थकत्वं निर्दिशति। कपिलस्योपदेशेषु बौद्धमतस्य प्रभावो नावलोक्यतेऽतः ख्रिस्तात् तावत षट्शतकपूर्वतनोऽयम्। तेन रचितं किञ्चिदपि नावशिष्टमिति गार्बेर्मन्यते। तत्त्वसमासाख्यं सांख्यसूत्रन्त्ववर्वाचीनम्। परमर्षिणा कश्चिदपि ग्रन्थो विरचित आसीदत्राप्यसौ सन्दिहानः।

गार्बेः कपिलस्यैतिहासिकताभासुरेरैतिहासिकतयाऽप्यधिकं सबलं मन्यते। क आसीदसावासुरिः? शतपथब्राह्मणे यज्ञोपदेष्टा आसुरिरेक आसीत्। कपिलशिष्येणासावसम्बद्ध इति स्पष्टम्। पञ्चशिखस्य उपदेशास्तु खण्डशः सांख्ययोगसाहित्येषु समुपलभ्यन्ते। हालस्तान् संकलयामास। आचार्यरोथस्याभिनन्दनग्रन्थे गार्बेः तेषामनुवादं प्रकाशितवान्। इमे पञ्चशिखस्य न केवलमैतिहासिकत्वं तस्य ग्रन्थप्रणेतृत्वमपि प्रमापयन्ति। सांख्यकारिकायाः सप्ततितमे श्लोके पञ्चशिखस्य कार्यं भणितम्। पञ्चविंशतितत्त्वानां गुह्यं पुरुषार्थज्ञानं कपिलर्षिणा समाख्यातम्। ज्ञानेऽस्मिन् वैकारिकाणां स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते। मुनिरेतदग्र्यं पवित्रमनुकम्पया आसुरये दत्तवान्। आसुरिः पञ्चशिखाय। पञ्चशिखेन तन्त्रं बहुधा कृतम्।



# सप्तमं प्रवचनम्

सांख्यशास्त्रस्याद्याचार्याणां कालविनिर्णयस्य दुःसाध्यत्वं बहुभिः परिलक्षितम्। पञ्चशिखो न केवलमीश्वरकृष्णस्य सांख्यसप्तत्याख्ये ग्रन्थ एव महाभारतेऽप्यासुरेः शिष्यरूपेण निर्दिश्यते। कपिलासुरिपञ्चशिखादीनामैतिहासिकत्वे सति पञ्चशिखस्य सुगतसमकालिकत्वं सुगतपूर्ववर्त्तित्वं वा स्वीकार्यं स्यात्। गार्बेस्तु पञ्चशिखार्थमेवंविधप्राक्तनत्वं स्वीकर्त्तुं नोत्सेहे। सांख्यसूत्रे पञ्चमाध्याये नैयायिकानां व्याप्तेः पञ्चशिखपरिभाषा लभ्यते। न्यायशास्त्रीयपदानामीदृशी प्राक्तनता नास्ति गवेषणासाध्या। अनेन हेतुनाऽचार्यो गार्बेः पञ्चशिखं ख्रिस्तस्य प्रथमशतके स्थापयति।

सनन्दनाचार्यमुद्दिश्य सांख्यसूत्रे केवलमेक एव शब्दः

प्रयुक्तः षष्ठाध्याये ऊनसप्ततितमे सूत्रे। गौडपादस्य सांख्यकारिका-भाष्ये ब्रह्मणः पुत्ररूपेणासौ स्मृतः। आचार्यगार्बेः सनातनस्य बाधायाश्चैतिहासिकत्वं प्रति उत्साहं दर्शयामास। बोधुः पुरातन-सांख्योपदेशकेषु सततं स्मर्यते ऋषितर्पणेषु। बहुधाऽसुरिपञ्च-शिखयोर्मध्ये। वेबर आशङ्कते, बुद्ध एव बौद्धसिद्धान्तविरोधि-भिर्ब्राह्मणैर्बोधुर्बोधा वाऽकारि। अभ्यूहोऽयं विचित्रः। गार्बे-रप्यत्रासहमतिं प्रकटीचकार। पौराणिकसाहित्येऽपराण्यपि सांख्योपदेष्टॄणां नामानि दृश्यन्ते।

विन्ध्यवासिनं गार्बेः प्रथमशतके स्थापयति। विन्ध्यवास-कोऽप्यसौ कथ्यते। योगसूत्रस्य भोजराजभाष्येऽमुष्योद्धरणद्वय-मवशिष्टम्। चतुर्थाध्याये द्वाविंशतितमे सूत्रे। विन्ध्यवासकोऽसौ विन्ध्यकवास इति स्मर्यते चीनीयभाषोपनिबद्धबौद्धग्रन्थे। तत्रासौ सांख्यशास्त्रस्याधिकारिविपश्चिद्रूपेण निर्दिष्टो भवति। तत्रस्थवर्णनानुसारं विन्ध्यवासिना सांख्यसिद्धान्तेषु परिवर्त-नान्यकारिषत बौद्धाचार्यैः शास्त्रार्थहेतोः। शास्त्रार्थेषु अमुष्य साफल्यमपि निर्दिश्यते। परं सांख्यशास्त्रेऽमुना परिवर्त्तनमानीत-मिदमबुद्धिग्राह्यम्। परम्परागतसांख्योपदेशानां युगानुकूलं व्यूहनं संघटनं वाऽसौ कृतवानित्युपपत्तिस्तु स्वीकार्या परं सिद्धान्तपरिवर्तनं विधायासावनिर्दिष्टनामा स्थातुं [illegible] तर्कस्तु नास्ति प्रसन्नः।

वार्षगण्यो जैगीषव्यश्च सांख्यशास्त्रस्य पुरातनाचार्येषु

स्मर्येते । तौ सांख्यसंक्लिष्टयोगमतस्याप्याचार्यौ । वार्षगण्यस्योद्धरणे व्यासस्य योगभाष्ये तृतीयाध्याये सांख्यतत्त्वकौमुद्याश्च लभ्येते । जैगीषव्यो महाभारतस्य हरिवंशस्य च वर्णनानुसारं योगोपदेष्टा बभूव । व्यासस्य योगभाष्यस्य द्वितीयाध्यायस्य वर्णनांशं प्रत्यप्यत्राचार्यगार्बेरनुसन्धातॄणां ध्यानं कर्षति । महाभारते तावुल्लिखितौ विद्येते, हेतुनानेन तयोः पुरातनत्वमसन्दिग्धं स्यात् ।

सांख्याचार्याणामेतेषां मनननिर्दिध्यासनप्रसूतसिद्धान्तानां परिणतिप्रभावो भारतीयवाङ्मये नानाविधरूपेण समायातः । उत्तरमीमांसाप्रभावस्य बलवत्ताऽविसंवादिता । हेतुमद्भिर्विनिश्चितैर्ब्रह्मसूत्रपदैर्भारतीयचिन्तनाया दिग् निर्धारिता । परं सांख्यशास्त्रस्यापि कतिपयशिक्षा भारतीयचिन्तनसरण्यामोतप्रोतभावेन संमिलिता विद्यन्ते । प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्था गुणा बहुसंख्यकैरुपदेष्टृभिः स्वीकृताः । प्रीत्यात्मकः सत्त्वगुणः । अप्रीत्यात्मको रजोगुणः । विषादात्मकस्तमोगुणः । भगवतो गीतायामपि सांख्यगुणानां वर्णनं दृश्यते । गुणा गुणेषु वर्त्तन्त इति मत्वा ज्ञानी न सज्जते, प्रकृतेर्गुणैः संमूढा गुणकर्मसु सज्जन्त इत्युक्त्वा भगवान् वासुदेवोऽपि त्रिगुणात्मिकां प्रकृतिं सांख्यशास्त्रवदेव उदाजहार । दुरत्ययां मायामप्यसौ लीलामानुषदेहधृक् गुणमयीं निजगाद । गुणानामेतेषामन्योन्यवृत्तिमुद्दिश्य सांख्यसप्ततेर्माठरवृत्तौ महाकृष्णस्य

जलतर्पणे देवानां प्रथितानां पुरातनसांख्योपदेष्टृणाञ्च नामानि श्रद्धालुभिः स्मर्यन्ते। ऋषीणामेषां प्रभावः स्पष्टः। स्मृतिष्वपि सांख्यसिद्धान्तानां पदगौरवं परिस्फुटम्। पुरातनतमसांख्यमतप्रतिपादिकाः कृतयस्तु दैवयोगाददृष्टिगोचरत्वमापन्नाः। कतिपयकृतीनां केवलं नामान्युपलभ्यन्ते। पञ्चशिखस्य कृतिः क्व गता ? न कोऽपि जानीते कथं कुत्र कालेन कवलिता। षष्टितन्त्रस्य सांख्यकारिकायामुल्लेखो ग्रन्थकारेणाकारि। द्वासप्ततितमा कारिका द्रष्टव्या। सप्तत्यां येऽर्थास्ते कृत्स्नस्य षष्टितन्त्रस्यार्थाः। आख्यायिकाविरहिताः परवादविवर्जिताश्च। जैनग्रन्थेष्वपि षष्टितन्त्रस्योल्लेखो मुनिभिरकारि। व्यासस्य योगभाष्ये चतुर्थाध्याये षष्टितन्त्रादुद्धरणं विद्यते, वाचस्पतिमिश्रविहितटीकानुसारम्। सांख्यसप्ततेर्गौडपादभाष्येऽपि षष्टितन्त्रादुद्धृतम्। पुरुषोऽस्तीति प्रतिपादयन् ईश्वरकृष्णो हेतून् संचिनोति। संघातपरार्थत्वादिति प्रथमः। त्रिगुणादिविपर्ययादिति द्वितीयः। अधिष्ठानादिति तृतीयः। गौडपादो विवृणोति—यथेह लङ्घनप्लवनधावनसमर्थैरश्वैर्युक्तो रथः सारथिनाऽधिष्ठितः प्रवर्त्तते तथाऽत्माधिष्ठानाच्छरीरमिति। तथा चोक्तं षष्टितन्त्रे—पुरुषाधिष्ठितं प्रधानं वर्त्तते।

सांख्यसप्ततिरेव सांख्यदर्शनस्योपलब्धपुस्तकेषु पुरातनतममित्यधुना सर्वे मन्वते। षष्ठशतकस्य मध्यभागे चीनीयभाषायामस्यानुवादोऽकारि। अतः पञ्चमशतके अस्य विद्यमानता

स्थिरीभवति । विद्यमानतायास्तात्पर्यं प्रणयनं नास्ति । भाष्यकारं गौडपादमाचार्यो गार्बेः सप्तमशतकेऽष्टमशतकस्यारम्भे वा स्थापयति । वाचस्पतिमिश्रस्य सांख्यतत्त्वकौमुदी सांख्याध्येतृभिर्भारते समनोयोगमधीयते । गार्बेमतानुसारं वाचस्पतिमिश्रस्य कालो द्वादशशतकस्य प्रथमभागे भवितुमर्हति । कारिकानुसारिणी स्वतन्त्रा सांख्यमतप्रतिपादिका कृतिरासीद् राजवार्त्तिकः । एकादशशतकस्य पूर्वार्द्धे सुप्रथितो लेखकोऽलबरूनी भारतमुद्दिश्य ग्रन्थं रचयामास । सांख्यमतप्रतिपत्त्यर्थममुना गौडपादस्य कृतिरपाठि । सांख्यविषयका या उपमाः सांख्यसाहित्येऽन्यत्र नावलोक्यन्ते ता गौडपादभाष्येऽलबरूनीवर्णने च लब्ध्वा गार्बेर्गौडाभिधानाद् गौडपादमूहते ।

सांख्यमतस्य लघ्वाकारां कृतिं तत्त्वसमासाभिधामसौ षोडशशतकस्य मध्यभागे स्थापयति । सांख्यसूत्रं ज्ञानाभिलाषिभिः सांख्यसिद्धान्तानां प्राचीनतमा कृतिर्मन्यते स्म । विदुषा हाल्लेन मान्यतेयं तिरस्कृता । सांख्यकारिका सांख्यसूत्रेष्वनुक्रियते । पुरातनग्रन्थकारैरपि सांख्यसूत्राण्यनिर्दिष्टानि । चतुर्दशशतकस्थेन सर्वदर्शनसंग्रहकारेण माधवाचार्येणाप्यन्यत्र सूत्रग्रन्था निर्दिष्टाः सांख्यमतमतिरिच्य । अनिरुद्धः पञ्चदशशतकस्य समीपे सूत्राणां टीकां विदधे, इत्याचार्यो गार्बेर्भूमिकायां साधयितुं चिन्तेष्टे । योगसूत्रविषयकं याकोबेर्मतन्तु भिन्नम् ।

योगसूत्रस्य साम्प्रतिकं रूपन्तु नास्त्यतिपुरातनं, परन्तत्र संकलितायाः सामग्र्याः पुरातनत्वं प्रत्याख्यातुं यत्नोऽनुपपन्नः । सांख्यसूत्रेषु बौद्धादिमतानि प्रत्याख्यातुं यत्यते । चतुर्दशशतकस्य कृतौ प्रयत्नस्यास्य वैयर्थ्यं स्फुटम् ।

# अष्टमं प्रवचनम्

सांख्यमतस्य पुराकालिकवृत्तमुद्दिश्य जर्मनदेशीयविद्वांसौ गोल्डनवेर्गो, यीशुसमाजी गवेषको दालमानश्चापि गवेषयाञ्चक्रतुः। विंशशतकस्य प्रभात एव दालमान एतद्विषयकं ग्रन्थं प्रणिनाय। वर्लिननगरात् प्रकाशिता कृतिरियं गवेषकस्य श्रमशीलतां भृशं परिचाययति। प्राप्ताशेषानर्थस्य पुरुषस्य विभिन्नचित्तवृत्तिभिः समाकृष्यमाणस्य हृदयग्रन्थिः कथं भिद्येत, सर्वसंशयोच्छेदः कथं भवेदिति प्रश्नमुत्तरितुं पुराकालिके भारते या चेष्टा बभूव, सैव कालं प्राप्य सांख्याख्यां लेभे। निःश्रेयसार्थिभिः सेव्यमानस्य सांख्यमतस्योदयकालिकं रूप महाभारतस्य दार्शनिकप्रसङ्गेषु ग्रन्थकार उदीरयामास। भगवद्गीता द्रष्टव्या, मोक्षधर्मश्च। महाभारतस्य सांख्ये ईश्वरकृष्णादीनां

सांख्ये चाद्भुतं साम्यम् । वैषम्य कादाचित्कमेव । परिशुद्धान्तः-करणग्राह्यस्य जगदीश्वरस्य विश्वयोनित्वं विद्याविद्येशितृत्वन्तु महाभारतस्य सांख्ये निगदितम् । तदास्तिक्यबुद्धिं वितनोति । ब्राह्मणग्रन्थानां श्रुतीनाञ्चानुचिन्तनाया असौ दालमानस्य दृष्टौ स्वाभाविकविकसनक्रमः । पुराकाले तत्त्वद्वयानुसन्धानं तत्त्वान्वेषिभिरकारि । आत्मानात्मतत्त्वयोः । अमुष्मात् सांख्यचिन्तना समुत्पन्ना पुरुषप्रकृतिभेदान्विता । पुरुषः स्वकर्मभेदितनाना-योनिषु संचरति । यावज्जीवं शङ्काव्यालैः समाकुलः प्रत्यस्त-मितशान्तस्वभावः कष्टायते । मौढ्यं स्वीकृत्य करस्थं महारत्नं त्यक्त्वा काचं विमार्गति । अवसादितमोहो ज्ञानमपरोक्षीकृत्य प्रज्ञानघनस्वरूपो जायत इति । आत्मानात्मतत्त्वचिन्तनात एवान्यत्र वेदान्तविज्ञानं समुदेति यत्र पुरुष एव सर्वं प्रतिभाति यच्च भाव्यम् तस्मादपरमन्यन्न किञ्चिदपि विद्यते । तस्मान्ना-णीयो न ज्यायोऽस्ति किञ्चित् । नैरन्तर्येण तेनैव सर्वं व्याप्यते । तमेव विदित्वा प्रत्यगात्मानं साधको मृत्युमत्येति, शाश्वत-कल्याणमुपैति । कैवल्यधामगमयितृत्वात् सर्वेशितृत्वाच्चासावेव सर्वविकल्पनां त्यक्त्वा परिमार्गितव्यः प्रज्ञानघनस्वरूपः परात्परः । नान्यः पन्था विद्यतेऽयनाय । यथानिकायं सर्वभूतेषु गूढं विश्व-स्यैकं परिवेष्टितारं ज्ञात्वाऽमृता भवन्ति । आत्मानात्मतत्त्वयोः समीक्षणादस्मात्परवर्तिनि काले सांशयिकानां तदनु बौद्धानाञ्च समुदयो जायते । सांख्ये भारतस्य चिन्तकानां चिन्तनपद्धतेः

प्रथमं सुशृङ्खलितं रूपमवलोक्यते । इदमास्तिक्यबुद्धेः सांख्यं महाभारते विद्यते । जगतः सृष्टेर्विलयनस्य च सिद्धान्ताः अत्रोपदिष्टाः । अपगतरागादिमल ईश्वरं समुपासीत संसरणदुःखावसादयितृत्वात्तस्य । स्वां प्रकृतिमधिष्ठायासावेवात्ममायया सम्भवति जगदुद्दिधीर्षुः । तस्यैवाध्यक्षतायां प्रकृतिः सचराचरं सूयते । एवंप्रत्ययः साधकस्तमचिरादेव उपयाति, आविर्भूतनिरतिशयानन्दः सन् । सांख्येऽस्मिन् संयमसदाचारयोर्महत्त्वं बलवत् । तदनु कालमानानुसारमास्तिक्यबुद्धिं हित्वा सांख्योपदेष्टार आत्मबहुत्वमतं प्रतिपादयामासुः । सांख्ययोगयोः पृथक्करणमस्मिन्नेव काले बभूव । पूर्वन्तु द्वयोरेकत्वमासीत् । भगवतो गीतायां सांख्ययोगयोरेकत्वं दार्ढ्येन निगदितम् ।

वेदानां बौद्धसाहित्यस्य चाध्येता एटमान ओलुनबेर्गोऽपि सांख्यशास्त्रमधिकृत्य निबन्धं प्रकाशितवान् । निबन्धोऽयं गार्बेप्रणीतग्रन्थमनु अष्टादशाधिकोनविंशतितमे ख्रिस्ताब्दे प्रकटीबभूव। सांख्यस्य पुरातन रूपमत्र निर्दिष्टम् । श्वेताश्वतरे, मैत्रायणीये भगवद्गीतायां, मोक्षधर्मादिषु सांख्यमिदं लभ्यते । तस्मात्कालादारभ्य नैरन्तर्येण सांख्यानुसारिणी चिन्तना प्रससार । पुरातनश्रुतिषु द्वैतमाभासते । बृहदारण्यके छान्दोग्ये चैकत्वप्रतिष्ठा दृढीभवतीत्यसौ स्वीकुरुते । अनात्मतत्त्वानुशीलनपरिणामास्तदनु कठोपनिषदि प्रकटीभवन्ति । सांख्यदर्शनस्य, विशिष्टपदान्यप्यत्र प्रयुज्यन्ते । जीवात्मानं रथिनं निरूप्योपनिषत्कारः काव्य-

विज्ञानयोः समन्वयञ्चकार। शरीरं रथं विद्धि, बुद्धिं सारथिं, मनो रसनामिन्द्रियाणि हयान्। आत्मेन्द्रियमनःसयुक्तं जीवात्मानं मनीषिणो भोक्तेत्याहुः। इन्द्रियेभ्योऽर्थाः पराः, अर्थेभ्यश्च मनः परं, मनसस्तु बुद्धिः परा, बुद्धेरात्मा महान् परः। महतोऽव्यक्तं परमव्यक्तात्पुरुषः परः। पुरुषस्तु प्रकृष्टतमा गतिः। ओल्डनबेर्गानुसारं प्राचीनमिदं सांख्यमतं श्वेताश्वतरोपनिषदि भगवद्गीतायां चास्तिक्यबुद्ध्या व्याख्यायि। भगवतः सर्वनियन्तृत्वमुद्दिश्य कथितं प्राच्याद्याश्चतस्रो दिशः प्रकाशयन् स भ्राजते। स एव संभजनीयः। शुभाशुभकर्मानुगुणतया पुरुषाणां नानायोनिषु विनियोजयितृत्वं तस्यैव। मायी स विश्वमुत्पादयति। अन्योऽत्र मायया संनिरुद्धो भवति। तमधिष्ठातारमीड्यं निचाय्य सुखैकतानस्वरूपां शान्तिं जीव एति। मोक्षधर्मे सांख्यमधिकं विकसितम्। पञ्चविंशतितत्त्वान्यपि निर्दिश्यन्ते। वीतकल्मषो मुक्तपुरुषस्तु षड्विंशतितमः। गार्बेबौद्धसांख्ययोः साम्यं प्रति समाकृष्टचेता आसीत्, ओल्डनबेर्गस्तयोर्वैषम्यं प्रति।

जर्मनभाषोपनिबद्धेषु सांख्यविषयकग्रन्थेषु फ्राडवालनरस्य कृतिराधुनिकी। मोक्षधर्मे पुरातनसांख्यमतमुपदिष्टम्। श्रुतीनां सांख्यमसौ केवलं सांख्यचिन्तनप्रभावपरिणतिरूपेण पश्यति। बुद्धचरितस्य चरकसंहिताया वा सांख्यस्यापि गवेषकाणां कृतेऽल्पमेव महत्त्वं, बाह्यस्थितानां विपक्षिणां वा सिद्धान्तिभूतत्वात्।

सांख्योत्पत्तेर्विश्वसनीयस्रोतांस्यसौ महाभारते ददर्श। महाभूतानि। संबद्धो मनोबुद्धिक्षेत्रज्ञः। क्षेत्रजस्तु पृथगिति। बृहदारण्यकश्रुतिरत्र द्रष्टव्या। फ्राडवालनरस्य मते पञ्चशिखस्य स्थानं सांख्यमतेऽत्युच्छ्रम्। पञ्चविंशतितत्त्वगणनाव्याख्यानस्योद्भावकोऽसौ। गार्बेरपि सिद्धान्तानामेषां समुद्भवं व्यक्तिविशेषबुद्धावेवाधिगच्छति। आरम्भिकशतकेषु सांख्यमतं प्रबलमासीत्। वार्षगण्यो विन्ध्यवासो माधवश्च मतस्यास्योद्भटा व्याख्यातारो बभूवुः। पञ्चमशतकस्य सांख्यकारिकायामीश्वरकृष्णेन सुव्यस्थितरूपमदायि। षष्ठशतकादिदं ह्लसति। बौद्धग्रन्थकारो दिङ्नागः सांख्यं साभिनिवेशं विरुणद्धि। दिङ्नागं यावत् सांख्यमतस्य प्राबल्यस्य पक्ष इत्थं दृढीभवति। सप्तमशतकस्थो धर्मकीर्त्तिः सांख्यं समुपेक्षते। सांख्यमतं तदाप्रभृति जह्लास। दशमशतकं यावत्सांख्यक्षेत्रं म्रियमाणं तस्थौ। तदनु पुनरुज्जीवति। अनिरुद्धमहादेवविज्ञानभिक्षूणां टीकाभिस्तस्य विद्वत्प्रियता प्रससार। कारिकाणां सम्यगधीत्यर्थमत्र सावधानतया भवितव्यं कालव्यवधानात्। सांख्यस्यारम्भिकरूपं परिचेतुं मोक्षधर्मस्यानुशीलनं कार्यम्। क्षेत्रक्षेत्रज्ञज्ञानान्मोक्षः सम्पद्यते। क्षेत्रक्षेत्रज्ञयोर्ज्ञानमेव ज्ञानमिति भगवता वासुदेवेनापि भणितम्। शरीरं क्षेत्रमित्यभिधीयते। क्षेत्रज्ञस्तस्य वेत्ता। सर्वक्षेत्रेषु वासुदेव एव क्षेत्रज्ञः। यावत् स्थावरजङ्गमं किञ्चित्सत्त्वं सञ्जायते तत् क्षेत्र-क्षेत्रज्ञसंयोगादेव। सांख्यमते पङ्गोरन्धस्य

च, नर्तकदर्शकयोश्च, पत्युः पत्न्याश्च या उपमा व्यवह्रियन्ते ताः फ्राउवालनरस्य मते पञ्चशिखः प्रवर्तयामास ।

स्मृतिष्वपि सांख्यमतं लभ्यते । मनुस्मृतौ तु गुणानां विस्तृतं वर्णनमकारि । सत्त्वरजस्तमांसि त्रीणि गुणलक्षणानि । महान् तैर्व्याप्तः सर्वान् भावानशेषतः व्याप्य तिष्ठति । सर्वं वस्तु त्रिगुणात्मकम् । परं यत्र काये यो गुणः साकल्येनातिरिच्यते, तदा तं कायवन्तं तद्गुणप्रायं कुरुते । सत्त्वरजस्तमांसि सलक्षणमुपवर्णितानि । सत्त्वं ज्ञानम् । रागद्वेषौ रजः । तमस्तु तद्विपरीतम् । एतेषां वपुः सर्वभूताश्रितम्, तत्र यत्प्रीतिसंयुक्तं प्रशान्तं प्रत्यस्तमितक्लेशं शुद्धाभं यद्यनुभवेत्तर्हि सत्त्वमुपधारयेत् । दुःखसमायुक्तप्रीतिजनकं प्रतीपं रज उपधारयेत् । मोहसंयुक्तं तम इति । गीतायामपीत्थमेव । मनोः साख्यं स्पष्टमेव सेश्वरम् । परात्परोऽयं ब्रह्मादिस्तम्बपर्यन्तस्य सर्वस्य प्रशासिता । अशब्दोऽस्पर्शोऽरूपोऽपि सन् स रुक्माभः । स एव ध्येयः । सततयायिनि निरालम्बे काले कस्यापि स्थितिर्ध्रुवा नास्ति । इन्द्रसहस्राणि कालेन निधनं गतानीति विष्णुस्मृतिः । तस्मात्सर्वमेव क्षरं त्यक्त्वाऽक्षरमेव समुपासीत । अनाद्यनन्तोऽयं महतः परः । तं निचाय्य साधको मृत्युमुखात्प्रमुच्यते । कैवल्याधिगमोपायवैरल्यशङ्कामित्थं श्रुतयः स्मृतयश्च शातयन्ति । विष्णुकूर्ममार्कण्डेयमत्स्यपुराणेषु सृष्टिवर्णनं सांख्यसन्निभम् ।

## नवमं प्रवचनम्

धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदय इति प्रतिपादकस्य श्रृंगारतिलकाभिधस्य श्रृंगाररसाप्लावितस्य काव्यस्य प्रतिभावतो दुःप्रापस्य प्रणेतुर्यस्य कलाकलापकुशला वाग्रसग्राहिणां चेतांसि हर्तुं श्रृंगारतिलकस्य सप्तमश्लोकानुसारं पण्यस्त्रीव क्षमासीत्, कालनिर्णयोऽस्ति सुदुष्करः। हालविश्वविद्यालयस्य संस्कृताचार्य आर० पिशेल ऊनविंशशतकस्योत्तरार्धे विषयममुमुद्दिश्य यल्लिलेख तदांग्लीयभाषोपनिबद्धत्वाद् विभिन्नदेशीयसंस्कृतज्ञसमाजे विचारानुद्दीपयामास। काव्यालङ्कारस्य श्रृंगारतिलकस्य च काव्यगरिमाणं तयो रसावस्थानसूचकशक्तिञ्च न कोऽपि सुधीः प्रत्यादिशति, प्राच्यजगति पाश्चात्यजगति वा। शिवोपासकः सरसकाव्यविधायकोऽसौ शतानन्दापराख्यो भट्ट-

दायुकसूनुः सामवेदी बभूवेति काव्यालङ्कारटीकया ज्ञायते। आचार्यपिशलस्य मतानुसारं बहुविधहेतोः कविरसौ प्रकृति-क्रीडाविलासरङ्गभूमिं काश्मीरं स्वजन्मना भूषयाञ्चकारेति स्वीकर्त्तव्यम् ।

पण्यस्त्रीणामनुमोदकोऽसौ नास्त्यवधार्यः। क्षेमेन्द्रस्यौ-चित्यालङ्कारस्य मुंबईसंस्करणे राजशेखरमुद्दिश्याचार्यपिटरसनो यल्लिलेख तत्पिशलो रुद्रटाय भणति। रुद्रटस्य पण्यस्त्रीवर्णने मौलिकत्वं विद्यते। रुद्रटः स्वयमपि पण्यस्त्रीनिषेवक आसीदिति व्यूहनं नास्त्यपरिहार्यम्। तासां विषोपमत्वं दर्शयित्वा कविरसौ पण्यस्त्रीवृत्तिं तिरस्करोत्येव। तासां रागद्वेषराहित्यं दर्शयित्वा—निर्गुणेऽपि न विद्वेषो न रागः स्याद्गुणिन्यपि—रूपाजीवा-विलोकितचमत्कारं निरूपयामास। तासां विलोकितैः पुराकाले कुप्यत्पिनाकिनेत्राग्निज्वालामालीकृतोऽनङ्गः पुनरुज्जीवित इति।

रुद्रटस्य प्राचीनत्वमशङ्क्यम्। शृंगारतिलके पुराकालिका-चार्येषु केवलं भरतस्य नाम निर्दिश्यते। आचार्यपिशलः श्लोकेऽ-स्मिन् शृङ्गारतिलकस्य प्राचीनत्वाय प्रमाणमनुपश्यति। भरताद्यैर्नाट्यमुद्दिश्य रसस्थितिर्निगदिता; रुद्रटयुगे यथामति काव्यमुद्दिश्यैषा रसस्थितिर्वर्णितेति श्लोकाशयः स्पष्टमेव शृङ्गारतिलकस्य प्राचीनत्वं साधयति। रसप्लावितं काव्य-मिदम्। रसोपासक आसीत् प्रणेता। व्यतिरेकमुखेन रसं प्रशंसन्नसौ सरसां वाणीमेव प्रशशंस। मयङ्कविरहिता यामि-

नीव, रमणं विना नारीव, त्यागात् ऋते लक्ष्मीरिव नीरसा वाणी न भातीति। एवंभूतां काव्यसाधनां श्लाघमानोऽसौ रसशास्त्री कविरात्मकवित्वमुद्दिश्य यल्लिलेख तदमुष्य काव्यविवेचनार्थं मोघं नास्ति। सानन्दप्रमदाकटाक्षविशिखैर्येषां मनो न भिन्नं, यैरन्येषु संसारसमुद्रपातविधुरेषु पोतायितं, यैर्द्वित्रैः पदैर्निःसीमसरस्वतीविलसितं संहृतं तेषामप्युपरि कस्यापि पुण्यात्मनो मतयः स्फुरन्तीति कथयताऽमुनाऽन्येषां कवीनां स्वस्य च साधनाया गुर्वर्थं उद्घोषितः। आचार्यपिशलोऽत्र रुद्रटस्यात्मकवित्वश्लाघां स्पष्टं मन्यते। रुद्रटेनोदाहरणार्थमन्यकवीनां श्लोका नो व्यवहृताः। काव्यालङ्कारे शृंगारतिलके च रुद्रटस्य काव्यशक्तिचमत्कारः स्पष्टायते। आचार्यपिशलस्य दृष्टावपि पुस्तके इमे रुद्रटस्य काव्यप्रतिभाप्राखर्यं प्रमाणयतः। शृंगारतिलकस्य शैलीसौन्दर्यममरुशतकेन साम्यं बिभर्ति।

पुराकालिकालङ्कारशास्त्रिणः स्वनियमव्याख्यानार्थं स्वरचितश्लोकानेव प्रयुञ्जते स्म। काव्यालङ्कारस्य टीकायां पूर्वभूतानामलङ्कारशास्त्रिणां दण्डिमेधाविहरिभामहादीनामेव निर्देशोऽवलोक्यते। विद्यानाथः प्रतापरुद्रीये काव्यालङ्कारशृङ्गारतिलकयोः प्रणेतारं रुद्रटं दण्डिभामहोद्भटानन्तरं स्मरति। तस्योक्तौ तदुक्तं प्राचा भामहेनेत्यत्र भामहस्य पुराभूतत्वन्तु स्पष्टमेव। रुय्यकोऽपि चिरन्तनालङ्कारकारप्रसङ्गे भामहोद्भटयोरनु रुद्रटं निर्दिशति। भानुदत्तस्य रसमंजर्यां रुद्रटः प्राञ्च

इति निगदितः । प्रतिहारेन्दुराजादपि ज्ञायते यदुद्भटः काव्यालङ्कारसंग्रहे स्वरचितश्लोकानेवोदाहरणार्थं प्रयुयोज । प्राक्तनालङ्कारशास्त्रिणां नियमव्याख्यानपद्धतिमिमां निर्दिशन्नाचार्यः पिशलो भामहप्रयुक्तोदाहरणानामपि भामहकृतित्वसाधनार्थं प्रतिहारेन्दुराजान्तर्गतानि वाक्यानि निर्दिशति—यत्र तु पदार्थसमन्वय उपमानोपमेयभावकल्पनया स्वात्मानमुपपादयति तस्य निदर्शनाभेदस्योदाहरणमुद्भटपुस्तके न विद्यते । तस्य तु भामहोदितमिदमुदाहरणम् । 'अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति । उदयः पतनायेति श्रीमतो बोधयन्नरान् ।।' आनन्दवर्धनस्य सहृदयालोकवृत्तावभिनवगुप्त उदाहरणमिदमुपन्यस्यति । तत्र भामहोद्धरणप्राचुर्यं विद्यते । वल्लभदेवस्य सुभाषितावलावप्युद्भटस्य भामहस्य च श्लोकावुद्धृतौ । आचार्य आउफरेख्टोऽपि भामहस्य श्लोकान् प्रकाशयामास । सहृदयालोकवृत्तावभिनवगुप्तो भामहेनाप्युदाहृतमिति पदपुरस्सरं गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनाविति पदमुदाहरति । काव्यालङ्कारवृत्तौ वामनोऽनेकश्लोकानां प्रणेतारमात्मानं निजगाद । दण्डिनो ग्रन्थेऽपि स्पष्टमिदम् नियमोदाहरणसम्बन्धत्वात् । आचार्यः पिशलोऽन्यानपि हेतून् पश्यति । शार्ङ्गधरपद्धतौ दण्डिनो नाम्ना सप्तदशोदाहरणानि दृश्यन्ते । अप्पयदीक्षितः कुवलयानन्देऽलङ्कारसारे बालकृष्णोऽपि काव्यादर्शादुद्धरतः । परवर्तिनोऽलङ्कारशास्त्रिणोऽपि यथावसरं श्लोकरचनाकौशलं

दर्शयन्ति स्म। रसमंजर्यां भानुदत्तो रसगंगाधरे जगन्नाथः प्रतापरुद्रीये विद्यानाथोऽलङ्कारकौस्तुभे कर्णपूरश्चन्द्रालोके जयदेवश्चेत्थं स्वनियमस्पष्टीकरणार्थं स्वरचितश्लोकानेव व्यवहरन्ति स्म। अलङ्कारशास्त्रिणो यथावसरं यथासाध्यं काव्यरचनाकौशलान्न विरमन्ति स्म। सहृदयालोके आनन्दवर्धनस्य टीकायामभिनवगुप्तो दशरूपटीकायां धनिकः, कविकण्ठाभरणेऽच्युतालङ्कारे च क्षमेन्द्रोऽलङ्कारसर्वस्वे रुय्यकोऽलङ्कारतिलके वाग्भटः साहित्यदर्पणे विश्वनाथोऽलङ्कारसारे बालकृष्णः कुवलयानन्देऽप्ययदीक्षितः, काव्यचन्द्रिकायां कविचन्द्रश्च। एवमेवान्यत्रापि।

इत्थमाचार्यपिशलो रुद्रटरचितपुस्तकयोरुदाहृतश्लोकानां ग्रन्थकारकृतित्वं द्रढयति। शार्ङ्गधरपद्धतौ काव्यालङ्कारे श्रृंगारतिलके वोपलब्धानां षोडशश्लोकानामुद्धरणं रुद्रटस्य नाम्ना सहावलोक्यते। परवर्त्तिनि काले संभूता अनल्पसंख्यका अलङ्कारशास्त्रिणो रुद्रटस्य श्लोकान् रचयितुर्नामनिर्देशं विनैव व्यवहरन्ति। आचार्यपिशलस्य मते शब्दापहारवृत्तिरियम्। काव्यप्रकाशस्य नवमे दशमे चोल्लासे काव्यालङ्काराद् बहवः श्लोकाः समुद्धृताः सन्ति, रुद्रटस्य नाम तु एकस्मिन्नेव स्थाने निर्दिष्टम्। अलङ्कारचूडामणौ पंचमे षष्ठे चाध्याये साहित्यदर्पणस्य दशमपरिच्छेदेऽलङ्कारतिलकस्य तृतीये चतुर्थेऽध्याये च रुय्यकस्यालङ्कारसर्वस्वे, शोभाकरस्यालङ्काररत्नाकरे वा रुद्रटस्य श्लोकाः परिलक्ष्यन्ते। आचार्यपिशलस्य मते इदमपि

तेषां रुद्रटप्रणीतत्वं प्रमापयति। कृतविद्वैर्नानाविधग्रन्थकारैः कृतेनोपयोगेन तेषां वैशिष्ट्यं स्पष्टीभवति। अमीषां श्लोकानां प्रणेता रुद्रट आसीदित्याचार्यपिशलः सदार्ढ्यं ख्यापयति। प्रथमाध्यायस्य तृतीयश्लोके कविरसौ श्रृंगारतिलकार्थं काव्येति-पदं प्रायौक्षीत्। 'काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद्गुणो भवति यद्यपि संप्रतीह। कुर्यां तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात्॥' चतुर्थश्लोकेऽपि कविरसौ स्वश्लोकानेव निर्दिशतीत्यत्राचार्यपिशलस्य मते संशयावकाशो नास्ति।

# दशमं प्रवचनम्

संस्कृतवाङ्मयस्य किरातार्जुनीयं शिशुपालवधञ्चाद्भुत-महिम्नान्विते काव्ये। नैषधीयचरितेन सह ते संस्कृतसाहित्य-रसास्वादनपरकविद्वद्भिः संस्कृतजगति सर्वत्रैव परमप्रेम्णा पठ्येते। बृहत्त्रयीतिनाम्ना प्रथितानि भारविमाघश्रीहर्षप्रणी-तानि काव्यानि इमान्यतिव्युत्पादकतया काव्येतिहासे प्रथम-पांक्तेयानि। भारवेर्माघस्य च काव्ययोर्बहुविधसाम्यं गवेषकाणां दृष्टिमूनविंशतिशतक एव समाचकर्ष। जर्मन्या आचार्यो याकोबी भारविं माघञ्चोद्दिश्य बहुदशकपूर्वं यल्लिलेख तदद्यापि संस्कृत-काव्यानुसन्धातृभ्यो विचारसामग्रीं प्रयच्छति। सहस्राधिकवर्षं यावद् यानि भारतीयविदुषां समादरपात्राणि तस्थुस्तेषां किरातार्जुनीयं शिशुपालवधं नैषधीयचरितमिति नामभिः

प्रथितानां महाकाव्यानां प्रणेतृनुद्दिश्य कृतः श्रमो न कदापि वैयर्थ्यमेति ।

द्वयोरेव महाकाव्ययोः कथावस्तु महाभारताद् गृहीतम् । महाभारतन्तु प्रथितमेव महाकवीनामुपजीव्यमिति । धर्मे अर्थे कामे मोक्षे च यन्महाभारतेऽस्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिदित्यादिपर्वोक्तिः सारशून्या नास्ति । ऋषिसंस्तुते श्राव्याणामुत्तमे पुण्ये पापभयापहे धर्मनिर्णायके ग्रन्थेऽस्मिन् ध्वन्यालोककारानुसारं शान्तो रस एव मुख्यः । महामुनिना मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया सूचित इति । परं महाभारतीयं कथांशं गृहीत्वा महाकाव्यनिर्मातृणां किरातार्जुनीयशिशुपालवधनैषधीयचरितानान्तु मुख्यो रस अन्य एव ।

आचार्ययाकोबेः दृष्टौ माघभारव्योः काव्ययोर्यत् साम्यं तन्नास्ति विस्मयावहम् । शत्रुवर्णनं, यात्रावर्णनं,पर्वतीयदृश्यावलिः, कुसुमचयस्योद्दीपकवर्णना, स्नानस्य, दिनान्तस्य विभावर्याः प्रणयविलासस्य च वर्णनानि द्वयोरेव महाकाव्ययोर्यथास्थानं समुपलभ्यन्ते । प्रथमसर्गे शत्रोः सामर्थ्यं द्वाभ्यामेव श्रोतृणां जिज्ञासावृत्त्युद्दीपकशैल्यां वर्णितम् । भारवेः किरातार्जुनीये सुयोधनस्य शासनप्रणालीं समधीत्य वर्णिलिङ्गी वनेचरस्तूष्णींभावस्यानिष्टकरतां सुनिश्चित्य द्वैतवनस्थस्य नृपाधिपस्य धर्मराजस्यानुज्ञामधिगम्य विनिश्चितार्थां सौष्ठवौदार्यविशेषशालिनीं वाचं प्रयुङ्क्ते । सुयोधनः केन प्रकारेण जगतीं

नयेन जेतुं समीहते स्म, कथं तेनास्ततन्द्रिणा नक्तंदिवं पौरुषं वितन्यते स्म, कथं तदीयं सभामण्डपांगणमनेकेषां राजन्यानां रथाश्वेन परिव्याप्तमासीत्, कथं संयति बहुयशसो महाबला धानुष्का आनृण्यार्थं प्राणपरित्यागमप्यभिलषन्ति स्म, कथमप्रतिहताज्ञस्य दुर्योधनस्य शासनं नराधिपैः शिरोभिर्माल्यमिवोह्यते स्मेति। शिशुपालवधेऽपि शत्रोः सामर्थ्यचित्रणमसामान्यं विद्यते। काव्येऽस्मिन् वक्तुर्व्यक्तित्वन्तु भिन्नमस्त्येव। किरातार्जुनीये शत्रुसामर्थ्यवर्णकोऽस्ति प्रणतो वनेचरः शिशुपालवधे सोऽस्ति देवर्षिर्हिरण्यगर्भतनूजः। हन्तव्यस्य शिशुपालस्य जननान्तरवृत्तान्तमुदाहृत्य देवर्षिर्नारदोऽत्याचारपरायणस्यास्य वधाय मधुसूदनं प्रेरयति। कथं स वीर्यातिशयानपि दशाननादीन् हसति स्म, कथं वनान्ताद्वनितापहारिणमाबद्धचलज्जलाविलं पयोधिं विलंघ्य दाशरथिर्जघान, कथं स विधेरप्युल्लंघितशासनः शुभेतराचारः कीनाशनिकेतनातिथ्ययोग्य आसीदिति। निर्दिष्टविषयवस्तुचयनसाम्यस्य स्पष्टीकरणमनावश्यकं कलेवरवृद्धिहेतोः।

चतुर्थसर्गे द्वावेव महाकवी छन्दःशास्त्रकौशलं दर्शयतः। यमककौशलञ्च। कौशलप्रदर्शनं पर्वतीयदृश्यवर्णनव्याजेनैव कृतम्। किरातार्जुनीयस्य पञ्चदशसर्गे शिशुपालवधस्योनविंशतितमे सर्गे च यत् संगरवर्णनं दृश्यते तस्मिन् द्वावेव शब्दप्रयोगाभीक्ष्णतां दर्शयितुं चेष्टेते। उदाहरणार्थं शिशुपालवधे—

विभावी विभवी भाऽऽभो विभाभावी विवो विभोः ।
भवाभिभावी भावाऽवो भवाऽभावो भुवो विभुः ॥
लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः ।
कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥
क्रूरारिकारी कोरेककारकः कारिकाकरः ।
कोरकाकारकरकः करीरः कर्करोऽर्करुक् ॥

किरातार्जुनीये—

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥
स्यन्दना नो चतुरगाः सुरेभा वाविपत्तयः ।
स्यन्दना नो च तुरगाः सुरेभावा विपत्तयः ॥
चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः ।
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥

उदाहरणानामेवंविधानां नैयून्यं नास्ति । तस्मिन् युगे सम्भवतश्श्रेष्ठेयं वाग्ज्ञानपरिपाकप्रमाणभूता मन्यते स्म । आधुनिकविदुषां दृष्टावेवंविधपाण्डित्यप्रदर्शनप्रयासस्य वैयर्थ्यं स्पष्टमेव। अत्रयमकगोमूत्रिकैकाक्षरसमुद्गकप्रतिलोमानुलोमपादप्रतिलोमानुलोमार्धसर्वतोभद्रार्धभ्रमकद्वचक्षराद्यावलिमहायमकादीनां क्रमसयोजनेऽपि सादृश्यं दृश्यते ।

किरातार्जुनीयस्य प्रतिसर्गस्यान्तिमश्लोकान्तर्वर्ती लक्ष्मीति शब्दः, शिशुपालवधस्य प्रतिसर्गस्यान्तिमश्लोकान्तर्भूतः श्रीति

शब्दः। आद्यान्तिमसर्गाभ्यामुदाहरणानि दीयन्ते। किराता-र्जुनीयस्य प्रथमसर्गं भारविराशीर्वादपूर्वकं समाप्नोति। 'विधि-समयनियोगाद्दीप्तिसंहारजिह्मं शिथिलवसुमगाधे मग्नमापत्प-योधौ। रिपुतिमिरमुदस्योदीयमानं दिनादौ दिनकृतमिव लक्ष्मी-स्त्वां समभ्येतु भूयः ॥' शिशुपालवधस्य प्रथमसर्गसमाप्तिः शार्ङ्गिण ओमिति कथनेन श्रियः प्रयोगपूर्वकं भवति। 'ओमित्युक्त-वतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभस्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति। शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारा-स्पदम् ॥' किरातार्जुनीयस्याष्टादशसर्गस्यार्थादन्तिमसर्गस्य समाप्ति-र्भवति श्लोकेनामुना—'व्रज जय रिपुलोकं पादपद्मानतः सन्गदित इति शिवेन श्लाघितो देवसंघैः। निजगृहमथ गत्वा सादरं पाण्डुपुत्रो धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥' पूर्वश्लोकेऽपि तपो-लक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुरिति लक्ष्मीः स्मर्यते। शिशुपालवधस्य समाप्तिकालेऽन्तिमे श्लोके सर्वसर्गावसानवद् माघः श्रियं स्मरति— श्रियाजुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षैर्वपुष्टश्चै-द्यस्य क्षणमृषिगणैः स्तूयमानं निरीय। प्रकाशेनाकाशे दिनकरक-रान् विक्षिपद्विस्मिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षांबभूवे ॥' सर्गाणां समाप्तावपि कविना स्वरचितमहाकाव्यं प्रति श्र्यङ्केति विशेषणं प्रयुक्तम्।

पुरातनकवीनां काव्येष्वेवंविधपद्धतिर्नास्त्यसाधारणे-

त्याचार्यो याकोबी अभिजानाति । सेतुबंधकाव्येऽनुरागो हर-विजयकाव्ये रत्नो दमयन्तीकथायाञ्च हरचरणसरोज इत्थं व्यवहृतवन्तः। परिपाटीयं नास्ति माघभारविसीमिता। परमत्राचार्ययाकोबी समानार्थकशब्दप्रयोगहेतोः कविसम्बन्धि-गवेषणार्थमस्या गरिमाणं नोपेक्षते ।

# एकादशं प्रवचनम्

किमिदं केवलं यादृच्छिकमेवासीद् यद् भारविर्माघश्च द्वावेव सर्गसमाप्त्यर्थं समानार्थकशब्दावङ्गीचक्रतुरथवासीदत्र विशिष्टहेतुः ? द्वावेव ग्रन्थौ श्रिय इति शब्देनारभ्येते । आचार्यो याकोबी अत्र यदृच्छां स्वीकर्तुं नोत्सहते । असौ सम्भावनामिमामपि स्वीकुरुते यद् द्वावेव ग्रन्थकारौ सहाध्यायिनावेकगुरू एकशाखावलम्बिनौ वास्ताम् । अलङ्कारशास्त्रं तयोः काव्यसाम्यस्य रहस्योद्घाटनार्थं नोपयुज्यते । छन्दोऽभ्यासोऽध्ययनस्थानानुसारी भवति । माघस्य भारवेश्च काव्ययोरन्तरं तयोः सतीर्थ्यतां प्रत्याख्याति । तयोः शैलीवैषम्यमपि न विस्मरणीयम् । माघस्य शैली भूयिष्ठा, मधुरा च । नवसर्गे पठिते माघे नवशब्दो न विद्यत इति कथनं नास्ति निस्सारम् । भारवेः शैली प्रशान्ता

संहृता च। शैल्या वैभिन्यमवलोक्य याकोबी तयोरेकदेशीयतां निराकुरुते।

ततस्तयो: काव्यसाम्यं कथं स्पष्टीक्रियते ? किमेकस्य काव्यमन्यकवेरादर्शीभूतमनुकार्यं वासीत् ? किं पूर्ववर्तिकाव्यादपि गरीयस: काव्यस्य सर्जनार्थं तयोरेकश्चेष्टयामास ? यद्येवं स्यात्तर्हि क आसीत्पूर्वग: ? कलात्मकश्लोकरचनायां माघो नि:संशयमेव भारविमतिशेते। किरातार्जुनीयापेक्षया श्रचङ्के शिशुपालवधे एवंविधश्लोकानां संख्या द्विगुणा। अस्मिन् क्षेत्रे माघस्योत्कर्षो विस्पष्ट:। किरातार्जुनीयस्य पञ्चमसर्गं शिशुपालवधस्य चतुर्थसर्गेण तुलयन्तु। सदृशौ सर्गाविमौ। शिशुपालवधे यमकानां प्राचुर्यं विद्यते। प्रत्येकं तृतीय: श्लोको यमकालंकृत: किरातार्जुनीये नास्त्येवंविधा काव्यचेष्टा। यमकानां संख्या शिशुपालवधापेक्षयार्धैव। छन्द:शास्त्रप्रावीण्यप्रदर्शनमप्यस्मिन् सर्गे काव्यप्रणेत्रोरुद्देश आसीत्। माघस्त्रयोविंशतिसंख्यकानिछन्दांसि व्यवहरति। ऊनविंशतितमश्लोकानन्तरं प्रत्येकं तृतीय: श्लोक: सर्गसमापनान्तं वसंततिलकायां विद्यते। भारविणा प्रयुक्तानां छन्दसां संख्यास्ति केवलं चतुर्दशमिता। स्वस्य छन्द:-शास्त्रकौशलं दर्शयितुं माघ: पञ्चसु सर्गेषु क्रमशो वसन्ततिलकां मालिनीं, मञ्जुभाषिणीं; रुचिराञ्च व्यवहरति। भारविणा तेषां प्रयोग: काले-काले प्रसंगवशादेव कृत:।

महाकाव्यानां शास्त्रीयलक्षणानुसारमप्याचार्यो याकोबी

स्वप्रतिभास्पर्शेन तस्य विकसनं कृत्वा, तस्य सौन्दर्यं वर्धयित्वा।

भारवेः किरातार्जुनीयस्यानल्पसंख्यकश्लोकानामन्तर्वर्त्ति-भावस्यादानं शिशुपालवधे दृश्यते, परिवर्त्तनपूर्वकं, सपरिष्कारञ्च। आचार्यो याकोबी द्वयोरेव महाकाव्ययोर्बहुविध-श्लोकान् तोलयाञ्चकार। स्थानसंकोचवशात्समस्तश्लोकाना-मुद्धरणं नास्ति शक्यम्। किरातार्जुनीयस्य सप्तमसर्गे पठामः—
'आकीर्णं बलरजसा घनारुणेन प्रक्षोभैः सपदि तरंगितं तटेषु।
मातङ्गोन्मथितसरोजरेणुपिङ्गं माञ्जिष्ठं वसनमिवाम्बु निर्बभासे॥'
शिशुपालस्य पञ्चमसर्गे समुपलब्धश्लोकस्य तुल्यरूपत्वं दर्श-नीयम्। 'संसर्पिभिः पयसि गैरिकरेणुरागैरम्भोजगर्भरजसाङ्ग-निषंगिणा च। क्रीडोपभोगमनुभूय सरिन्महेभावन्योन्यवस्त्र-परिवर्त्तमिव व्यधत्ताम्॥' आचार्ययाकोबेर्मतानुसारं माघेन श्लोकेऽस्मिन् सलिलोपमा शिशुपालवधाद् गृहीता, परं भाव-सौंदर्यवृद्धिपूर्वकम्। किरातार्जुनीये षष्ठसर्गे पठामो—'बहु बर्हिचन्द्रकनिभं विदधे धृतिमस्य दानपयसां पटलम्। अवगाढ-मीक्षितुमिवेभपतिं विकसद्विलोचनशतं सरितः॥' शिशुपालवधस्य पञ्चमसर्गे माघो लिलेख—'यां चन्द्रकैर्मदजलस्य महानदीनां नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः। तां प्रत्यवापुरविलम्बित-मुत्तरन्तो धौताङ्गलग्ननवनीलपयोजपत्रैः॥' भावग्रहणं गृहीत-भावस्य बृंहणमत्रापि व्याख्यानपेक्षम्॥ किरातार्जुनीयस्याष्टम-सर्गे काचिदुन्नतपीवरस्तनी लोचनतः पुष्पजं रजः फूत्कारा-

निलैरपनेतुमपारयन्तं स्ववल्लभं कुचेन वक्षसि जघान, कपट-परिज्ञानहेतोः । माघोऽपि मुखानिलैः कौसुमपरागव्यपोहनचेष्टां सप्तमसर्गे वर्णयति, भावबृंहणं कृत्वा । सुदृशो नयनात् पुष्पभवं रजःकणं मुखानिलेनापनयति प्रियायाः सपत्न्याः नेत्रद्वयं रोषरजोभिरभीक्ष्णमापुपूरे । रूपकानुप्राणितस्य विभावनालकार-स्याद्भुतं निदर्शनं कविनात्र प्रस्तुतीकृतम् । किरातार्जुनीय-स्याष्टमसर्गे निश्चयान्तसन्देहालङ्कारस्योत्कृष्टनिदर्शनं प्रस्तौति भारविर्यदा नलिनीवने निगूढां सखीं योषितोऽतिविलब्य निश्चिक्युः । शिशुपालवधस्याष्टमसर्गे कमलिनीवनान्तर्गतभावं माघः संक्षिपति, सौन्दर्यवृद्धिपूर्वकम् । किरातार्जुनीयस्य नवम-सर्गे क्षीबताया व्रीडितस्य च यद्वर्णनं लभ्यते तस्यानुकरणं शिशुपालवधस्य दशमसर्गे माघेनाकारि, परं माघस्य मुकुलिता-क्षियुगानामवसादितवाचां मदप्रभावस्य ह्रियश्च वर्णनं काव्य-दृष्ट्या सुन्दरतरम् । किरातार्जुनीयस्याष्टमसर्गे त्रासविलोल-दृष्ट्यः सुराङ्गनाः परितो विवर्तमानमीनविघट्टितोरवः कम्पित-पाणिपल्लवाश्च सखीजनस्यापि विलोकनीयतामुपाययुः । शिशु-पालवधस्याष्टमे सर्गे चलशफरीविघट्टितोरवो रमण्यः हेतो-र्विनापि क्षुभ्यन्ति । आचार्यो याकोबी अत्रापि माघस्य भावा-दानक्रियां पश्यति यद्यपि श्लोकेऽस्मिन् तस्य सौन्दर्यचित्रणं भारवेः श्लोकापेक्षयावरपदभाक् । माघोऽत्र भारवेर्विघट्टितोरु-शब्दप्रयोगमनुकुरुते । तदनन्तरमसौ लाटानुप्रासप्रयोगात्

व्याकरणसूक्ष्मत्वसूचनाच्च श्लोकवरिष्ठतां सम्पादयितुं यतते। श्लोकेऽस्मिन्नसौ पाणिनीयव्याकरणस्य चतुर्थाध्यायस्य प्रथमपादस्य सप्ततितमसूत्रं प्रत्यपि वाचकानां ध्यानं समाकर्षति।

# द्वादशं प्रवचनम्

माघस्यानुकरणपद्धतिर्मौलिकी अविद्यत। भारवेः श्लोकानां भावं क्वचिदसौ स्वक एकस्मिन्नेव श्लोके समाहरति, क्वचिदसौ भारवेः कल्पनां कतिपयश्लोकेषूपनिबध्नाति। किरातार्जुनीयस्य सप्तमसर्गे भारविर्वारणमुद्दिश्य यत् श्लोकद्वये प्रकटीकरोति तन्माघः शिशुपालवधस्य पञ्चमे सर्गे एकेनैव श्लोकेन। वनगजदानगन्धिपरकूलं संप्राप्तुमायस्तो गङ्गाप्रवाहरुद्धमार्गो गजो निहितशिताङ्कुशं मूर्धानं क्रोधाद् विधुनोति, वनकरिणां दानधाराभिः संपृक्तं हिममपि वारि न पिबति। माघस्य श्लोके भारवेः कल्पनाग्रहणमिति याकोबी मन्यते। गजोऽन्यकरिभुक्तमदाम्बुतिक्तं वारि न गृह्णाति न प्रजहाति, जनौघं रिक्तोदपात्रकरं कुर्वन्।

माघ एवंविधवर्णनार्थं भारवेरनुगृहीत इति सर्वत्र नास्ति विभावनीयम्। माघ आसीत् सत्यमेव महाकविः। महाप्रतिभासम्पन्नो महाकविः। तस्य कल्पनाशक्तिरासीत्प्रखरा, जीवनस्य जगतश्च पर्यवेक्षणशक्त्यप्यसाधारणी। आचार्यो याकोबी अपि तथ्यमिदं नोपेक्षते।

माघो भारवेः प्रतिस्पर्धी आसीत् किम्? युगस्य सर्वाधिकसंस्तुतकवेर्भारवेर्यश:प्रार्थी वा? प्रश्नममुमधिकृत्य याकोबी गवेषकाणां ध्यानं तयोर्नाम्नोऽर्थं प्रति कर्षति। महाकव्योर्नामविश्लेषणमिदं नास्ति केवलं चित्तरञ्जकं, तत्तयोः सम्बन्धनिर्धारणेऽपि हितावहम्। भारवेरर्थः स्पष्ट एव। माघशब्दस्तु उपनाम। अन्यत्रादर्शनात्। शिशुपालवधस्य कविना नामेद गृहीतं भारवेर्यश आच्छादयितुं यथा माघमासो रवेर्मयूखानाच्छादयति। भारवेःकाव्यप्रतिभां शिशुपालवधस्य कवेः प्रतिभातिशेत इति दर्शयितुम्। अत्र राजशेखरस्य श्लोकः सुभाषितरत्नभाण्डागारे संकलितोऽन्यस्य कस्यचित्कवेः श्लोकश्च विचारणीयौ—

कृतप्रबोधकृद्वाणी भा रवेरिव भारवेः।
माघेनेव च माघेन कम्पः कस्य न जायते॥
माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तो भारवेरेव कवयः कपयो यथा॥

न केवलं भारविमेव, माघ आचार्ययाकोबेर्दृष्टौ कविकुलचूडामणिं कालिदासमपि स्पर्धते। रघुवंशमहाकाव्यस्य नवमसर्गे

चतु:पञ्चाशत् श्लोकाः सन्ति द्रुतविलम्बितच्छन्दसि । प्रत्येकं श्लोकस्यान्तिमचरणे यमको दृश्यते । उदाहरणार्थम्—

'मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ।
प्रणयिनीव नखक्षतमंडलं प्रमदया मदयापितलज्जया ।
सुरभिगंधिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ।
उपवनांतलताः पवनाहृतैः किसलयैः सलयैरिव पाणिभिः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनी वधूः ।'

एवमेव शिशुपालवधस्य षष्ठसर्गस्थितेषु षट्षष्ठिश्लोकेष्वपि यमकालंकारोऽवलोक्यते । सर्गेऽस्मिन् ऋतुवर्णनं कविना कृतं, कालिदासस्य सर्गेऽपि ऋतुपतेर्विस्तृतं वर्णनं लभ्यते । द्रुत-विलम्बितानन्तरं कालिदासेन नवमसर्गे द्वादशसंख्यकविभिन्न-छन्दःस्वष्टाविंशतिसंख्यकाः श्लोका रचिताः, माघेनाष्टविभिन्न-छन्दःसु त्रयोदशश्लोकाः । द्रुतविलम्बितात्परं कालिदासो वसंत-तिलकां, शालिनीं, प्रहर्षिणीमौपच्छंदसिकं, मालिनीं, रथोद्धतां मंजुभाषिणीं, पुष्पिताग्रां, विषमवृत्तं, स्वागतां, वैतालीयं, मत्तमयूरं व्यवहरति । माघप्रयुक्तवृत्तानि सन्ति प्रभा, स्वागतोपजाति-रौपच्छन्दसिकं, तोटकं, कुटजा, मत्तमयूरो वसंततिलका, द्रुतविलम्बितश्च ।

सम्भवतो माघस्तस्मिन् युगे लब्धप्रतिष्ठानन्यान् कवीनपि पस्पर्धे । सम्भावनाया हेतुमाचार्ययाकोबी शिशुपालवधे वर्णि-

तायां दुर्जननिन्दायां विलोकयति। शिशुपालवधस्य षोडशसर्गे एकविंशतितमश्लोकादारभ्य पञ्चत्रिंशत्तमश्लोकं यावदेवंविध-वर्णनं विद्यते। सर्वंकल्याणकरत्वेऽपि सज्जनोन्नतिरसतामनिशं गुरुहृत्सन्तापकारिणी। उत्तमो जनः परोन्नतिभिर्न व्यथते परमध-मस्तु परवृद्धिभिराहितव्यथः परद्वेषं करोत्येव। दुर्जननिन्दा-वर्णनं परवर्त्तिकाव्येषु बहु प्रचलितम्। गौडवहकाव्ये, धर्म-शर्माभ्युदयकाव्ये, श्रीकण्ठचरितकाव्ये, विक्रमांकचरितकाव्ये च तदादावेव। स्वयं रामचरितमानसप्रणेत्रा सज्जनदुर्जनप्रसंगोऽयं नोज्झित। :

पर्यालोचनस्यास्य निष्पत्तिः का ? आचार्ययाकाबेर्मता-नुसारं माघ आसीन्महत्त्वाकांक्षी। स स्वयुगस्य सर्वोत्कृष्टकवेः पदमाप्तुं प्रयेते। एतस्मिन् कार्ये प्रथिततमपूर्वकवीनां स बभूव प्रतियोगी। दुरारोहलक्ष्यमासीद् भारवेः यशःसुरभ्यपन-यनस्य। तस्मिन् युगे भारविरासीत् सनिश्चयं सर्वत्र लब्धप्रतिष्ठः। शिशुपालवधस्यान्तिमश्लोके पठामः सुकविकीर्त्तिदुराशया दत्तकस्यात्मजो लक्ष्मीपतेश्चरितकीर्त्तनमात्रचारु शिशुपालवधा-भिधानं काव्यं व्यधत्त। आचार्ययाकोबी सुकविकीर्तिदुराशयेति प्रयोगं माघस्य मनोरथज्ञानार्थं गुर्वर्थं मेने। सुकवीनामितिशब्दस्य व्याख्यां कुर्वन् मल्लिनाथः सर्वंकषाव्याख्यायां वररुचिसुबन्धु-सोमनाथभवभूतिक्रीडानंदकालिदासबिल्हणभारविबाणमयूरादीन् स्मरति। अत्रापि भारवेः पूर्वभूतत्वमङ्गीकृतम्।*

भारविणा धूर्जटेर्माघेन श्रीपतेर्गुणानुवादः कृतः। रुचीनां वैभिन्न्यमेव कवीनां कथावस्तुग्रहणहेतुः।

तयोः कालनिर्णयः सुकठिनः। भारविस्तु स्वमुद्दिश्य मौन एव। चतुस्त्रिंशदधिकषट्शततमे ख्रिस्तीयाब्दे भारवेर्यशश्चन्द्रिका प्रसृतासीद् यतस्तस्य नाम कालिदासेन सह शिलालेखे दृश्यते। स्वभावत एवासौ कविः शिलालेखापेक्षया पूर्वतनः। पाणिनीयव्याकरणस्य काशिकायामपि किरातार्जुनीयादुद्धरणं विद्यते। माघस्य स्थितिस्तु भिन्ना। शिशुपालवधेऽसौ पञ्चश्लोकेषु स्ववंशं वर्णयति। तस्य पितुर्नाम सर्वाश्रयोऽप्यासीत्। वल्लालस्य भोजप्रबन्धे मेरुतुंगस्य प्रबन्धचिन्तामणावपि माघचरितं लभ्यते। परं तयोरैतिहासिकं महत्त्व नास्ति। वामनस्य काव्यालङ्कारवृत्तौ शिशुपालवधात् श्लोकाः समुद्धृताः सन्ति। काव्यालङ्कारवृत्तिरष्टमशतकस्य नवमशतकस्यादिभागस्य वा कृतिः। अतो नवमशतकान्माघः पूर्वतनः सिध्यति। आचार्यो याकोबी ग्रंथगतप्रमाणैस्तं सप्तमशतकपूर्वभूतं साधयति। बाणः सुबन्धुश्च द्वावेव माघकाव्यानुगृहीतावास्ताम्। कादम्बर्यां चन्द्रोदयं वर्णयन् बाणो लिलेख—शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मितायां दशनप्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत्। तदनु रसातलादवनीमवदार्योद्गच्छता शेषफणमण्डलेनेव रजनीकरबिम्बेनाराजत रजनी। शिशुपालवधस्य नवमसर्गस्य श्लोकद्वयमत्र तुलनीयम्।

'वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ।।
विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः ।
मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ।।'

बाणस्य चन्द्रोदयवर्णनं शिशुपालवधस्य वर्णनानुकृतिरिति आचार्ययाकोबी मन्यते ।

बाणस्य पूर्ववर्त्ती सुप्रथितः सुबन्धुः प्रभातकालं वर्णयन् माघस्य प्राभातिकवर्णनमनुकुरुते । मत्संगतिप्रवृद्धो वारुणी-समागमाद्द्विजपतिरेष पतिष्यतीति हसन्त्यामिवाखण्डलककुभि । वर्णनमिदं द्व्यर्थकम् । शिशुपालवधस्यैकादशसर्गेऽपि प्रभातस्यैवं-विधवर्णनं लभ्यते ।

उदयमुदितदीप्तिर्याति यः संगतौ मे
पतति न वरमिन्दुः सोपरामेष गत्वा ।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ।।

कल्पनासाम्यं सुस्पष्टम् ।

# त्रयोदशं प्रवचनम्

कवीनां जगति विहंगमानां विशिष्टं स्थानमिति काव्यविदां विदितचरमेव। तेषां लालित्यं, व्योमक्रीडा, कल्लोलश्च कस्य चेतसि सुधां न सिञ्चति? कालिदासस्य काव्येषु द्विजानां मनोहारि चित्रणं विद्यते। 'उपमा कालिदासस्य' इति प्रथितामुक्तिं द्रढयन् कविस्तेषां यच्चित्रणञ्चकार तदुद्दिश्य प्रणीतो ह्यासहंसगनस्य निबन्ध एकस्मिन्नेव स्थाने महाकवेर्विविधरचनासूपलब्धं विहगवर्णनं सुलभीकरोति।

विहगविहंगविहंगमाण्डजपत्रिपतत्रिशकुनिशकुन्तद्विजगरुत्मत्खगादयः शब्दा एतदर्थं कविना व्यवहृताः। जलाण्डजानामप्यभावस्तस्य रचनासु नास्ति। नीरपतत्रिजलविहंगौ च। मेघदूते विप्रयुक्तो यक्षो मेघमुज्जयिन्याः सौधोत्सङ्गपरिचयार्थं

प्रेरयित्वा पौराङ्गनानां विद्युद्दामस्फुरणाच्चकितैश्चञ्चलापाङ्गैः रमणाय नोदयन् निर्विन्ध्यां वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणेति वर्णयति। श्लोकेऽस्मिन् विहगपदं हंसार्थकं भवितुमर्हति। रघुवंशे प्रथमसर्गे दुष्प्रापयशा नृपतिर्महर्षेः वनान्तरात् प्रत्यागतैः समित्कुशफलाहरणशीलैस्तापसैः पूरितमुटजानां प्रवेशरोधकैर्मृगैश्चाकीर्णमाश्रमं प्राप्नोति। अत्र आलवालेषु नीरपायिनां खगानां विश्रमार्थं द्रुमाणां सेचनान्ते मुनिबाला अनोकहान् उज्भन्ति। नवमसर्गे दशरथस्य राज्यश्रियं वर्णयन् कविर्गृहदीर्घिकासौन्दर्यं निरूपयति। विकसितनीरजास्ताः। मदकलोदकलोलविहंगमाश्च। स्मितचारुतराननाः श्लथशिञ्जितमेखला रमण्य इव ताः शुशुभिरे। चतुर्दशसर्गे सीतासंतापतप्ता मयूरा नृत्यं त्यजन्ति, पादपाः पुष्पाणि, हरिण्यो लब्धान् दर्भान्। कविर्वाल्मीकिः कुशेध्माहरणाय गतवान् आसीत्। रुदितानुसारी स सीतामभ्यगच्छत्। महाकविरादिकवेः सदयहृदयतां स्मारयति। कथंभूतः कविः? यस्य निषादेनाहतस्याण्डजस्य दर्शनेन समुत्पन्नः शोकः श्लोकत्वमापद्यत। "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहित"मिति। अष्टमसर्गेऽजो धैर्यं विहाय वाष्पगद्गदं परिदेवनं कुरुते। देहभृतां निःसारतां धिक् कुरुते। स्वं शब्दत एव क्षितेः पतिं मनुते, भावनिबन्धना प्रीतिस्तु शुचिस्मितायां परलोकमसंनिवृत्तये गतायामेव। शर्वरी शशिनं

पुनरेति । द्वन्द्वचरं पतत्रिणं दयिता पुनः प्राप्नोति । पतत्री तु चक्रवाकः, दयिता चक्रवाकी । इत्थं पुनर्दर्शनाशाहेतोस्तौ शशि-चक्रवाकौ विप्रयोगान्तरसहनसमर्थौ । पुनरागमनरहिताऽत्यन्त-गता प्रेयसी तस्य हृदयं सन्तापयति । त्रयोदशसर्गे पुष्पक-विमानाधिरूढो रामाभिधानो हरिः सीतां सम्बोध्य विमानगतिं वर्णयते । सकानना भूमिर्विदूरीभवतो जलनिधेः निष्क्रामतीव । पुष्पकव्योमयानं रघुपतेः मनसोऽभिलाषो यथाविधस्तथा प्रवर्तते । क्वचित् सुराणां पथा संचरते, क्वचिद् घनानां, क्वचित्पतताम् । द्वितीये सर्गे दिलीपः स्ववीर्यरक्षिता मनोः संततिरिति प्रमाणयन् धेनोः समाराधनासक्तश्छायेव तामनुगच्छन्नन्तर्मदावस्थो द्विपेन्द्र इव वन्यान् दुष्टसत्त्वान् विनेष्यन्निव पार्श्ववर्त्तिनोऽनुचरान् त्यजति । कवेरुत्प्रेक्षात्र दर्शनीया । तस्य दिलीपस्य पार्श्वयो-र्वृक्षा उन्मदानां वयसां विर वैरालोकस्य शब्दमुदीरयामासुः । आलोकशब्दो जयशब्दसमानार्थकः । आलोको जयशब्दः स्यादिति विश्वः । अभिज्ञानशाकुन्तले दुष्यन्तो हेमकूटनामकं तपःसंसिद्धिक्षेत्रं किंपुरुषपर्वतमागच्छति यत्र भगवान् प्रजापतिः सपत्नीकस्तपस्यति स्म । श्रेयांसि अनतिक्रमणीयानीति मत्वा दुष्यन्तस्तं प्रदक्षिणीकृत्य गन्तुमिच्छति । मारीचाश्रमं हस्तेन दर्शयन् मातलिर्मुनेस्तपः वर्णयति । वल्मीकार्धनिमग्नविग्रह उरसा संदष्टसर्पत्वचा कण्ठे जीर्णलताप्रतानवलयेनात्यन्तसपीडि-तोऽसव्यापि शकुन्तनीडनिचितं जटामण्डलं धारयन् अभ्यर्कबिम्बं

स्थितः स्थाणुरिव स्थिरो महामुनिस्तपस्तपति । विक्रमोर्वशीये चतुर्थाङ्के जलविहंगमराजमुद्दिश्य कथ्यते—मानसरोवरं प्रति पश्चात् गमिष्यसि । पाथेयमुत्सृज । बिसन्तु पुनरपि प्राप्स्यसि एव । तावत् परोपकारं कुरु । चिन्तातो मां समुद्धर । स्वार्थ-साधनात् निवेदककार्यं गुरुतरं भवति । तत्रैव राजहंसपद-प्रयोगोऽपि लभ्यते । प्रथमप्रियाचरणनिक्षेपशंसको नूपुररव श्रुत्वा प्रणयी भृशं मोदते । तदनन्तरं ज्ञायते यदसौ मानस-रोवरगमनोत्सुकानां राजहंसानां कूजितमासीन्न तु नूपुरस्य शिञ्जितम् । मानसोत्सुकपतत्रिभिः प्रियाप्रवृत्तिं ज्ञातुं यत्यते ।

मधोराविर्भावं वर्णयन् कविरादौ कुसुमजन्म संकेतयति, तदनु नवपल्लवान्, तदनन्तरं मधुपानां कोकिलानां च कूजि-तम् । इत्थं क्रमानुसारं वृक्षभूयिष्ठां वनस्थलीमवतीर्य मधुरावि-र्भवति । कुसुमप्राथम्यवर्णनमुद्दिश्यात्र मल्लिनाथेनोक्तक्रमस्य विरोधः परिहृतः । केषाञ्चिद्द्रुमाणां पल्लवप्राथम्यात्केषाञ्चि-त्कुसुमप्राथम्यान्नोक्तक्रमस्य दृष्टिविरोध इति । मधुना संभृतां सरसः कमलिनीमलयो नीरपतत्रिणश्चाभिययुः ।

शुकादयः पतत्रिणः पञ्जरेऽपि निवसन्ति स्म । रघुवंशस्य सप्तदशसर्गेऽतिथिर्बद्धानां बन्धच्छेदं, बलीवर्दादीनां भारमोक्षं धेनूनां दोहनिषेधमादिशति । पञ्जरस्थाः शुकादयो ये राज्ञः क्रीडापतत्रिण आसन् तेऽपि तस्यादेशात् मुक्तिं लब्ध्वा यथेष्ट-गतयो बभूवुः । शुकादीनां क्रीडासाधनत्वं न केवलं नृपतीनां

वेश्मनि दृश्यते ।

विहगानां चञ्चुमुद्दिश्य मुखाननयोः प्रयोगः कविना विहितः । सरसिजानां रजोभिररुणितानां तटिनीनां वर्णनं कुर्वन् कविः ऋतुसंहारे ताः कारंडवाननविघट्टितवीचिमालाः कादम्ब-सारसकुलाकुलतीरदेशा इति निरूपयति । तास्तटिन्यो हंस-विरुतैः सर्वतः प्रीतिमुत्पादयन्ति । उड्डयनसाधनं पक्ष इति । नराधिपसुतानां नृपपुत्राणाञ्च समागमस्य प्रत्ययप्रकृतियोग-संनिभत्वं वर्णयित्वा कविर्भाविविपदः सूचयन् दशरथस्य वर्त्मसु ध्वजतरुप्रमाथिभिः प्रतीपगामिभिर्मरुद्भिस्तस्य वरूथिन्याः संक्लेशं निरूपयति । तत्र श्येनपक्षपरिधूसरालकाः सांध्यमेघ-रुधिरार्द्रवाससो दिशो भवन्ति ।

मेघदूते कविरङ्गानुकूलं शिप्रावातं वर्णयति । विशालायां कल्ये प्रस्फुटं मदकलं सारसानां कूजितं विस्तारयन् स्फुटितानां जलजानां परिमलसंसर्गेण सुरभितो गात्रानुकूलः शिप्रासरिद्-वातः स्त्रीणां सुरतखेदं नुदति ।

# चतुर्दशं प्रवचनम्

विहगानां स्वराय कूजितं विरुतं रुतं रवः स्वन आदि-पदानि कालिदासीयकाव्येषु प्रयुक्तानि। हांसहेंसगनः स्वके निबन्धे एतदर्थमृतुसंहारादुदाहरणानि गृह्णाति। मेघदूतादपि। ऋतुसंहारे हेमन्तवर्णने कविः प्रमदानां श्रृंगारसाधनानां व्यवहारं निर्दिशन् हंसध्वनिमुद्दिश्य हंसरुतमिति पदं प्रयुङ्क्ते। प्रमदाः काञ्चीरज्जुभिर्नितम्बान् नो भूषयन्ति। काञ्चीरज्जव आसन् काञ्चनरत्नचित्राः। साधारणसमाजस्य प्रमदानां चित्रणमिदं नास्तीति स्पष्टमेव। हंसरुतं भजमानैर्नूपुरैः पाद-सरोजानि नालंक्रियन्ते। अन्यत्रास्मिन्नेव काव्ये हंसरव इति पदं प्रयुक्तम्। शरदृतुं वर्णयन् कविर्नववध्वा शरदं समीकरोति। काशवसना विकचकमलमनोज्ञमुखा सोन्मादहंसरवनूपुरनादरम्या

शरदागच्छति । आपक्वा शालयः सन्ति रुचिरेषन्नम्रा तनुलता। एवंविधा रूपेण रम्या शरन्नववधूरिव प्राप्ता भवति । अन्यत्र हंसस्वन इति पदं प्रयुक्तम् । शरदृतोरेव वर्णने । अध्वगामिनोऽत्र प्रेयसीनां विप्रयोगे भ्रान्तचित्ता रुदन्ति । अमी तासां श्यामल-नयनानां सौन्दर्यमुत्पलेषु लक्षयन्ते । मत्तहंसस्वनेषु कनक-काञ्चीनां क्वणितम् । अधरस्य रुचिरशोभां बन्धुजीवे प्रसूने । परिवर्त्तिनि श्लोके हंसविरुतार्थं हंसवचनमिति पदं दृश्यते । हांसहेंसगनस्य दृष्टिः प्रयोगस्यास्योपरि न पपात । हंसवचनमिति पदप्रयोगः कवेर्दृष्टिं स्पष्टयति । शरदागमशोभा क्वापि प्रयाति । अज्ञातस्थानम् । सा कामिनीनां वदनेषु शशिनो लक्ष्मीं त्यजति कमनीयं हंसवचनं तासां मणिनूपुरेषु जहाति; बन्धूकप्रसून-कान्ति मनोहरेष्वधरेषु ।

पक्षिणां व्योमगतिर्बहुत्र वर्णिता । शरदृतोः निरूपणे कविः शक्रधनुषः पयोधरान्तराले तिरोधानं वर्णयित्वा वियतः पताकायाः सौदामिन्याः स्फुरणाभावं निरूपयति । बलाका नभः पक्षपवनैर्न धुन्वन्ति । मयूरा उन्नतमुखाः सन्तोऽन्तरिक्षं नावलोकयन्ति ।

विहङ्गमा एकचराः क्वचिदेवावलोक्यन्ते । वैवश्यस्य कथा त्वन्या । ऋतुसंहारस्य प्रथमसर्गे व्यवहृतं विहगवर्गं प्रति हांसहेंसगनो विदुषां ध्यानं समाकर्षति । दावाग्निदाहतप्ताः सन्ति वनान्ताः । द्रुमाणां पर्णानि शीर्णानि । तत्रस्थो विहग-

वर्गः श्वसिति। कपिकुलं क्लान्तं सत् गिरौ लतादिभिः पिहितं स्थानमुपयाति। गवययूथः सर्वतस्तोयमभिलषन् भ्रमति। शरभाणां कुलं निरलसं भूत्वा कूपाज्जलमुद्गृह्णाति। मिथुन-युगलयोः प्रयोगोऽपि द्रष्टव्यः। शरदृतोर्निरूपणे कविः सरसां शारदीयशोभां निर्दिशति। तानि सोन्मादानां हंसानां मिथुनैर-लंकृतानि सन्ति। सोन्मादहंसमिथुनैरुपशोभितानीति। तानि स्वच्छानि विकचानि कमलानि उत्पलानि च भूषयन्ति। तेषां वीचिमाला मन्देन प्रभातवायुना उद्गच्छन्ति। एवंभूतानि सरांसि विप्रयुक्तानां हृदयमुत्कण्ठयन्ति।

विहगानामावासार्थं नीड इति पदं प्रयुक्तम्। अभिज्ञान-शाकुन्तले कष्टतपसो मुनेस्तपो वर्णयन् मातलिस्तस्य जटा-मण्डलस्य शकुन्तनीडनिचितत्वं निर्दिशति। मेघदूते दशार्णानां वर्णनं द्रष्टव्यम् मेघासन्ने दशार्णाः सूचिभिन्नैः केतकीकुसुमैः पाण्डुच्छायोपवनकण्टकशाखावरणाः संपद्यन्ते। गृहबलिभुजां नीडारम्भैस्तेषां ग्रामचैत्यानि संकीर्णानि जायन्ते। पक्वफलै-स्तेषां श्यामानि जम्बूवनानि रमणीयत्वं सम्पादयन्ति। हंसाः कतिपर्यदिनेषु तिष्ठन्ति। काकादिग्रामपक्षिणो गृहबलिभुजः।

स्वच्छन्दचारिणां विहगानां स्वातन्त्र्यापहारिणः पाप-कर्माणो मानवाः शकुनिलुब्धकसंज्ञकाः। अभिज्ञानशाकुन्तले विदूषको विषण्णवदनो दण्डकाष्ठमवलम्ब्य स्वं राज्ञो वयस्य-भावेन निर्विण्णो मन्यते। महत्येव प्रत्यूषे दास्याःपुत्रैः शकुनि-

लुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितो भवति ।

रघुवंशस्य चतुर्दशसर्गे जनकनन्दिन्या निर्वास-व्यथा वर्णिता विद्यते । जनकात्मजा प्रसूतेरूर्ध्वं सूर्यनिविष्टदृष्टिः सती तपस्तप्तुमभिलषति, जननान्तरेऽपि राघवेन्द्रभर्तृत्वसम्पादनार्थं, भाविविप्रयोगपरिहारार्थञ्च । कलत्रभावाभावेऽपि मनुना प्रणीतस्य धर्मस्यानुपालनं निर्दिशति । तदनु रामानुजे दृष्टिपथमतिक्रान्ते सति सा दुःखातिभारान्मुक्तकण्ठं भयापन्ना कुररीव भूयिष्ठं चक्रन्द । उत्क्रोशकुररौ समौ इत्यमरकोषः ।

दशरथस्य वर्त्मन्यमङ्गलचिह्नानां राजकुमाराणां परिणयानन्तरं प्रकटीकरणं पूर्वमेवोल्लिखितम् । श्येनोपस्थितिरमंगलसूचिकेति ह्रांसहेंसगनो निर्दिश्य कालिदासस्य सांध्यमेघरुधिरार्द्रवाससो दिशो वर्णने पश्चिमीयरुचेः प्रातिकूल्यं निर्दिशति । श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससो दिश ऋतुमत्यो नार्य इवावलोकनार्हा नो बभूवुः ।

गृध्रा अपि कालिदासेनोल्लिखिताः । रघुवंशे दशरथात्मजौ यज्ञविध्वंसकान् हन्तुं तपोवनं समागच्छतः । बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् । रक्तबिन्दुभिर्वेदीं प्रदूषितां वीक्ष्यापोढकर्मणां याजकानां संभ्रमो भवति । सपदि रघुनन्दनस्तूणीरमुखाद् बाणं समुद्धरन्नम्बरे गृध्रपक्षपवनैरीरितध्वजं रक्षसां बलं पश्यति । मल्लिनाथः स्वटीकायामत्र शकुनार्णवाद् गृध्राणाममङ्गलविधायकत्वं स्पष्टयति । आसन्न-

मृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभाग इति ।

रघुवंशस्य द्वादशसर्गे यातुधानैः सह राघवेन्द्रस्य सङ्गरो वर्णितः । आजौ दाशरथिरेक आसीत्; यातुधानास्तु सहस्रशः । परं यावत्संख्याकास्त आसन् तावत्संख्याको दाशरथिस्तैर्ददृशे । रामस्य देहातिगाः शिता बाणाः खरदूषणादीनामायुः पपौ; तेषां शोणितन्तु पतत्रिभिः पीतम् । तदनु सा सुरद्विषां वरूथिनी बाणानां वर्षकारिणं रामचन्द्रं योधयित्वा गृध्रच्छायेऽप्रबोधाय सुष्वाप । विक्रमोर्वशीये पञ्चमाङ्के परितुष्टो विदूषकः प्रविश्य किञ्चित्कथयति । तदनु दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य नीयमानो भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो मणिरामिषशंकिना गृध्रेणाक्षिप्तो भवति । अभिज्ञानशाकुन्तले राजपुरुषोक्तिः पूर्वमेव निर्दिष्टा यत्र जालोपजीविनां गृध्रबलित्वं शुनो मुखदर्शनं वाऽशंक्यते । मालविकाग्निमित्रेऽव्याजसुन्दरीं रूपे शिल्पे चाद्भुतां मालविकां प्राप्तुकामो राजा सखायं प्रार्थयते । विदूषको मालविकां पयोदपङ्क्तिभिरवरुद्धां कौमुदीमिव पराधीनदर्शनां मन्यते, राजानं रणाङ्गणोपरिचरं गृध्रमिवामिषलोलुपं भीरुकञ्च ।

## पञ्चदशं प्रवचनम्

गृध्रार्थं कुणपभोजनः क्रव्यभोजनो विहगाधमः शकुनिहताश इति पदानि कालिदासस्य काव्येषु प्रयुक्तानि। गृध्रेषु जटायुरासीद् रामभक्तः। रघुवंशे जटायुः पक्षीन्द्र इत्युक्तः। रावणो मृगस्य रूपं गृहीत्वा मारीचेन रक्षसा राघवौ वञ्चयित्वा पक्षीन्द्रस्य प्रयासेन क्षणं विघ्नितो भूत्वा सीतां जहार। राघवौ रामलक्ष्मणौ सीतान्वेषिणौ दशशिरसा लूनपक्षं कण्ठगतैः प्राणैर्दशरथप्रीतेरनृणं गृध्रं जटायुषं ददर्शतुः। जटायू रावणेन हृतां जनकात्मजां रामलक्ष्मणौ वचसाचष्ट। रावणयुद्धात्मकमात्मनः सुमहत्कर्म कायिकव्रणैरावेद्य व्यापन्नः। गृध्रस्य जटायुषः सख्यभाव आत्मत्यागश्च श्लाघार्हौ। गृध्रयोनौ समुत्पन्नोऽप्यसौ स्वकर्मणा रामस्यैतावान् परमप्रीतिभाजनो भवति यत्तयोर्हृदि

पितृव्यापत्तिशोको नवीभवति। पितृवदेव तावग्निसंस्कार-मारभ्य पराः क्रिया ववृताते। राजकीयसम्मानपुरःसरं तस्य भूमौ स्थापनक्रिया बभूवेति हांसर्हेसगनस्य कथनं कालि-दासानुसारि नास्ति। पितृवत्तौ जटायुष और्ध्वदेहिकं कृतवन्ताविति।

तदनु हांसर्हेसगनो विष्णोर्वाहनं गरुत्मन्तं प्रति पाठकानां ध्यानमाकर्षति। विष्णुस्तु गरुडवाहनरूपेण प्रथित एव। पौलस्त्येनोपप्लुता देवा हरिमभिजग्मुः। उदन्वन्तं प्रापुः। आदिपूरुषो योगनिद्रां जहौ। भोगिनः फणामण्डलोदर्चिमणिभि-र्द्योतिततनुं शेषस्य भोगासन उपविष्टं तं दिवौकसो ददृशुः। पद्मनिषण्णायाः श्रियोऽङ्के चरणावास्ताम्। अंशुकं बालातप-निभमासीत्। शारदं दिवसमिव योगिनां सुखदर्शनश्च। तत्र विनीतो गरुत्मान् कृताञ्जलिरुपस्थित आसीत्। शेषेण सह वैरं हरेः संनिधानात्त्यक्तमासीत्; कायेषु कुलिशव्रणलक्ष्माणि आसन्। रघुवंशस्याष्टादशसर्गे आनन्दजलाविलनेत्रायाः प्रजाया नृपतिना सम्यक् शासनं निर्दिशन् कविर्गुरुशुश्रूषया पात्री-कृतात्मनः पत्त्ररथेन्द्रकेतोः स्पष्टाकृतित्वं निर्दिशति। अन्यत्र रामस्य शक्तिं वर्णयन् महोरगविसर्पिविक्रमस्य गरुडस्योल्लेखं कृतवान्।[३] गरुडो महापराक्रमी। राजिलेषु स न प्रवर्त्तते। षोडशसर्गे गारुत्मतास्त्रं व्यवह्रियते कोपविलोहितक्षेण कुशेन। अगस्त्यादधिगम्य रामः कुशायाभरणोत्तमं ददौ। तज्जैत्रा-

भरणं सलिलक्रीडासु बुब्रोड । तदान्वेषणे आनायिनो विफल-प्रयासा अप्यम्लानमुखप्रसादा आभरणगतिं ज्ञापयामासुः । तदासौ कुमुदनाशाय गारुत्मतमस्त्रं समाददे ।

कुमुदोऽविमृश्यकारी नासीत् । कार्यान्तरमानुषस्य विष्णोः सुतस्य समाराधनीयस्य प्रीतेर्विघाताय नासीदसौ समुद्यतः । सर्गस्य समाप्तिश्लोके नागस्त्रिभुवनपतेः पुत्रं बन्धुं लेभे । कुशोऽपि तक्षकस्य पञ्चमं पुत्रं कुमुदं बन्धुं लेभे । कुमुदः वैनतेयात् शङ्कां तत्याज; कुशः शान्तव्यालामवनिं शशास, प्रजानां कान्तः सन् । विक्रमोर्वशीये प्रथमाङ्के प्रस्तावनायां नृपतिना ज्ञायते यन्महेन्द्रस्य प्रहरणं स्वर्गस्यालङ्कार उर्वशी कुबेर-भवनात् प्रतिनिवर्त्तमाना समापत्तिदृष्टेन हिरण्यपुरवासिना केशिना दानवेन चित्रलेखया सह बन्दिग्राहं गृहीताऽस्ति । उर्वशीप्रत्यानयनायैशानीं दिशं प्रति अश्वानाशुगमनार्थं चोद-यित्वा सूतस्य रथवेगं निरूपयन्नसौ रथवेगेन पूर्वप्रस्थितं वैनतेय-मप्यासादयितुं स्वं समर्थं मन्यते । रघुवंशस्य दशमसर्गे राज-पत्नीनां स्वप्नदर्शनानि वर्णयन् कविर्गरुडार्थं सुपर्ण इति पदं प्रयुङ्क्ते । हेम्नः पक्षाणां प्रभापुञ्जं सुपर्णो व्योम्नि वितनोति स्म । जलमुचो वेगेन तेन आकृष्यन्ते स्म । एवंविधेन सुपर्णेन ता आपन्नसत्त्वा उह्यन्ते स्म ।

गरुडानन्तरमपरविहगान् निर्दिशन् हांसहंसगनो बलाका निरूपयति । रघुवंशे दाशरथिः स्थाणुना दग्धकायस्य मीन-

केतनस्य तपोवनं प्राप्नोति, विग्रहेण मदनस्य प्रातिनिध्यं कुर्वन्, न तु कर्मणा। तत्रागस्त्यशापदारुणरूपा सुकेतुसुता ताडका संमुखीभवति; रामलक्ष्मणौ निर्भीकौ लीलया एव धनुषी अधीज्यं चक्रतुः। ताडका तयोर्ज्यानिनादं शृण्वती कृष्णपक्षीय-क्षपावर्णा निबिडा बलाकिनी मेघावलीव प्रादुर्बभूव। कालि-कया सह बलाकापङ्क्तिसम्बद्धा। मेघदूतेऽपि बलाकाः दृश्यन्ते। मेघं दिवसगणनातत्परायै धनपतिक्रोधविश्लेषितो विप्रयोगी स्वं सन्देशवाहकं चिकीर्षन् निमित्तानां मंगलत्वं सूचयति। अनुकूलः पवनः मंदं मंदं नुदति। सगंधश्चातको मधुरं व्याहरति। गगने गर्भाधानसुखार्थमाबद्धपङ्क्तयो बलाका नयनसुभगं मेघं नूनं सेविष्यन्ते। प्रेक्षिष्यन्ते वा। मारुतस्यानु-कूल्यं, चातकस्य ध्वनिर्बलाकानां दर्शनञ्च मङ्गलं सूचयन्तीति-शास्त्रवचनम्। बलाकेति पदं सर्वदा स्त्रीलिङ्गे व्यवहृतं भवति। कतिचिट्टीकाकारा बलाका बकपत्न्य इति कथयन्ति। अन्यत्रापि संस्कृतसाहित्ये बलाका पयोदानां सहवर्त्तिनी। मृच्छकटिके गर्जद्भिः सतडिद्बलाकशबलैर्मेघैर्मनः सशल्यं भवति। कादम्बर्यां कञ्चित्स्फटिकबलाकावलीवान्तवारिधारा मायामेघमाला दृश्यते।

सारसा अपि कविना चित्रिताः। रघुवंशे स्निग्धगंभीरनिर्घो-षस्यन्दनमाश्रितौ सुखस्पर्शवातैः सेव्यमानौ दम्पती विधातार-मभ्यर्च्य पुत्रकाम्यया वसिष्ठस्याश्रम गच्छतः। मार्गे श्रेणी बन्धादस्तम्भां तोरणस्रजं कुर्वद्भिः कलनिर्ह्रादैः सारसैस्तौ

क्वचिदुन्नमिताननौ दृश्येते। त्रयोदशसर्गे उपान्तवानीरवनाच्छन्नानि ईषद्दृश्यपारिप्लवसारसानि पम्पासरोजलानीति रघुनन्दनः कथयति। पम्पासरस्यन्योन्यस्मै चक्रवाकमिथुनानि उत्पलकेसराणि ददति स्म। सीतया वियुक्तेन रामेण दूरान्तरवर्त्तिना सस्पृहं तदवलोकितानि। स्तबकाभिनम्रां पम्पासरसस्तटवर्त्तिनीमशोकलतां सीताप्राप्तिबुद्ध्याऽसौ परिरब्धुमचिकीर्षत्। पुष्पकविमानस्यान्तरेषु लम्बिनीनां स्वर्णकिंकिणीनां स्वनं श्रुत्वा गगनमुत्पतन्त्यो गोदावर्याः सारसपंक्तयो जनकात्मजां प्रत्युद्व्रजन्त्य इवावलोक्यन्ते स्मेत्युत्प्रेक्षा। मेघदूतस्य सारसानां मदकलं कूजितं पूर्वमेव निर्दिष्टम्। ऋतुसंहारे सरसो विपत्तिवर्णने सारसानां पलायनमपि वर्ण्यते। पारस्परिकसंघर्षणसंलग्नः करिभिर्ग्रैष्मकालिकस्य सरसः पंको विमर्द्यते। मीना विपन्ना भवन्ति। अशेषबिसवृन्दानि समुत्क्षिप्यन्ते। भीताः सारसा द्रवन्ति। नद्याः कादम्बसारसकुलाकुलतीरदेशत्वं पूर्वमेव निर्दिष्टम्। तृतीयसर्गे शरदृतौ सीमान्तराणि मनुष्याणां प्रमोदं जनयन्ति। सम्पन्नशालिसमूहेन भूतलमाच्छाद्यते। स्वस्थस्थितानि प्रचुराणि गोकुलानि शोभां वर्धयन्ते। सारसकुल सहितैः हंसा नदन्ति।

## षोडशं प्रवचनम्

सारसाः सरसः पक्षिण इति क्रेयनबोर्गस्य व्याख्या युक्तियुक्ता, परं सर्वे सरसो विहङ्गमाः सारस इति पदेन नाभिधीयन्ते। हांसहेंसगनस्यामुमनुवादमुद्दिश्य या विप्रतिपत्तिः सा युक्तिसंमता। अमरकोषे यादवे चापीदं स्पष्टीभवति। पुष्कराह्वास्तु सारसाः। सारसो मैथुनीकामी गोनर्दः पुष्कराह्वयः। सारसानां स्वनमुद्दिश्य कलनिर्ह्रादो मदकलं कूजितञ्च प्रयुज्येते। तेषां स्वनो नृणामानन्दवर्धकः। रघुवंशस्य ऋतुसंहारस्य च श्लोकैः स्पष्टं यत्सारसाः सरित्सु सरोवरेषु निवसन्ति। श्रेणीबद्धास्ते।

बाणनिर्माणकार्ये कङ्कपक्षप्रयोगो भवति स्मेति रघुवंशात्स्पष्टम्। धेनुं सिंहः प्रसह्याकर्षति। आक्रन्दनं नृपस्य अद्रिशोभाप्रहितेक्षणस्य दृष्टिं निवर्तयति। केसरिणं दृष्ट्वा राजा

निषङ्गात् शरमुद्धर्तुमिच्छति। परं तस्य दक्षिणो हस्तो नख-प्रभाभूषितकङ्कपत्रे सायकपुङ्ख एव सक्ताङ्गुलिः सन् चित्रार्पितारम्भ इव तिष्ठति।

जलविहङ्गमानां राजास्ति हंसो, राजहंसः, कलहंसो वा। स्त्रियां हंसी, राजहंसी, कलहंसी वा। रघुवंशे कुशः पुलिन्दैरुपतान्युपायनानि पश्यन् विन्ध्यं लङ्घयति। तत्र गजसेतुबन्धात्प्रतीपगामिनीं भागीरथीमुत्तरति। गगनोल्लङ्घनेन लोलपक्षाः हंसाश्चानायासेन चामराणि भवन्ति। कुमारसंभवे पर्वतराजकन्यकायाः सौन्दर्यगुणवर्णनविधौ कवी राजहंसान्न विस्मरति। प्रत्युपदेशलुब्धैर्नूपुरशिञ्जितानि आदित्सुभिः राजहंसैः संनताङ्गी पार्वती लीलाञ्चितविक्रमेषु गतेषु व्यनीयत। रघुवंशे वेत्रग्रहणे नियुक्ता दौवारिकी राजसुतां राजान्तरं निनाय, पवनोत्पन्नोर्मिलेखा मानसराजहंसीं पद्मान्तरमिव। कुमारसंभवे पार्वतीं शिवप्रणयपराङ्मुखीं कर्तुं वर्णी शिवममङ्गलाभ्यासरतिमिति वर्णयते। शम्भुस्तु वलयीकृतसर्पः। पार्वती तु हिरण्यगर्भस्य कुले समुत्पन्ना। वपुस्तु त्रिलोकसौन्दर्यमिवोदितम्। नवोढाया दुकूलं कलहंसचिह्नं भवति। शिवस्य गजाजिनन्तु शोणितबिन्दून्वर्षति। रघुवंशे कलहंसीनां मदालसं गतं प्रशंस्यते। नवप्रवालास्तरणेऽपि यस्या अङ्गं दूयते एवंविधां शुचिस्मितां दयितामिन्दुमतीमपहाय प्रणयी विलापकाले कोकिलासु प्रियतमायाः भाषितं, कलहंसीषु मदालसं गतं, पृषतीषु च चल-

मीक्षितं समीरणेनेषत्कम्पितव्रततिषु विभ्रमान् पश्यति । ऋतु-संहारे शरदृतौ काशपुष्पैर्मही, सुधाकरेण यामिन्यः, हंसैर्नदीनां जलानि, कुमुदकुसुमैः सरांसि, पुष्पभारनतैः सप्तच्छदैर्वनान्ताः, मालतीपुष्पैरुपवनानि शुभ्रीकृतानीति कविना वर्ण्यते । शरदृतौ सरित्सु हंसानां संख्या वर्धते इत्याशय. । हंसगतित्वं न केवलं कालिदासेन, बहुभिः कविभिः प्रशंसितम् । विक्रमोर्वशीये विप्रयोगी हंसः स्वकान्तागतेरपहारको मन्यते । यद्विभावितैक-देशेनाभियुज्यते तद्देयम् ।

ऋतुसंहारे शरदृतौ कामिनीनां सुललिता गतिर्हंसैर्जिता भवति, विकसितनीरजैर्मुखचन्द्रकान्तिः । नीलोत्पलैर्मदेन कलानि नेत्राणि जितानि, तनुभिस्तरङ्गैः रुचिरा भ्रूविभ्रमाश्च । नूपुरध्वनेः हंसरुतानुकारित्वं प्रत्यपि हांसहेंसगनो पाठकानां ध्यानमाकर्षति । ऋतुसंहारे ग्रीष्मर्तौ कामिनां ग्रीष्मविलासं वर्णयन् कविः कान्तामुखस्य निःश्वासेन विकम्पितमधोः, सुतन्त्रिगीतस्य सक्षौममेखलस्य नितम्बमण्डलस्य सचन्दनयोः सहाराभरणयोः स्तनयोरास्वादं निरूप्य सनूपुरचरणानां हंसरुतानुकारित्वं वर्णयति । प्रचुरालक्तकरसस्य रङ्गेण रञ्जितैर्नूपुरसमेतैः पदे पदे हंसरुतानुकारिभिः नितम्बिनीनां चरणैर्जनस्य चेतसि मन्मथोद्दीपनं क्रियते । शरदृतुं वर्णयन् कविः सोन्मादानां हंसानां रवं नूपुरनादेन समीकरोति । तत्रैव शरदागमश्रीः कामिनीनां मणिनूपुरेषु काम्यं हंसवचनं स्थाप-

यित्वा क्वापि प्रयाति । अन्यत्र हेमन्तवर्णने प्रमदानामवस्थां वर्णयन् कविर्हंसरुतं भजद्भिः नूपुरैस्ताः पादाम्बुजानि नो भूषयन्तीति निर्दिशति । पूर्वमपीमे श्लोका उल्लिखिताः । विक्रमोर्वशीये प्रणयिना राजहंसानां कूजिते प्रियाचरणनिक्षेपशंसी नूपुररवः श्रूयते । यथार्थता त्वन्या । मेघश्यामा दिशोऽवलोक्य मानसोत्सुकचेतसो राजहंसाः कूजन्ति स्म । नूपुरशिञ्जितन्त्वध्यारोपितम् । न केवलं नूपुरशिञ्जितमेव, कनककाञ्च्याः क्वणनमपि हंसानां स्वनेषु स्मर्यते ।

हंसा एकाकित्वप्रिया न सन्ति । कविः सरसां वर्णनं कुर्वन् ऋतुसंहारे तानि सोन्मादहंसमिथुनैरुपशोभितानीति वर्णयति, स्वच्छप्रफुल्लकमलोत्पलैर्भूषितानि च । अभिज्ञानशाकुन्तले दुष्यन्तः पूर्वन्तु साक्षादुपगतां प्रियामपजहाति, पुनश्चित्रार्पितां बहु मन्यते । निकामजलां स्रोतोवहामतीत्य मृगतृष्णिकायां प्रणयवान् जायते । यो यः प्रदेशः शकुन्तलाभिरूपस्तं लमालिखितुकामो भवेदिति सानुमतेर्वचनं श्रुत्वा राजा स्रोतोवहां मालिनीं सैकतलीनहंसमिथुनां चिकीर्षति तामभितो निषण्णहरिणान् गौरीगुरोः पावनान्पादांश्च । शाखालम्बितवल्कलतरोरधः कृष्णमृगस्य शृङ्गे वामनयनं कण्डूयमानां मृगीञ्च । सैकतलीनहंसायाः स्थाने सैकतलीनहंसमिथुनेति पदप्रयोगो विचार्यः । सरित्सु सरोवरेषु निवसन्तो हंसाः हंस्यश्च मध्येऽहनि निदाघतापादात्मरक्षणार्थं दीर्घिकापद्मिनीनां

पत्राणां छायासु विश्रमन्ति। मालविकाग्निमित्रस्य द्वितीयाङ्के राजा प्रियादर्शनार्थमवसितो जायते। परं दाक्षिण्यमवलम्ब्य पर्युत्सुकतामेव केवलं प्रकटीकुरुते। नेपथ्ये वैतालिको मध्याह्नस्योपारोहणं ज्ञापयन् दीर्घिकायाः कमलिनीनां पत्रच्छायासु मुकुलितनेत्राणां हंसानां विश्रामं पारावतानामत्यर्थतापात् सौधोत्सङ्गद्वेषं, पिपासाकुलानां शिखिनां वारियन्त्रेषु परिपतनं सूचयति। हंसानां मृणालप्रियत्वं मेघदूते निर्दिष्टं विद्यते। राजहंसानां साहाय्यं मेघो लप्स्यत एव इत्युत्साहवर्धनपुरःसरं कनकवलयभ्रंशरिक्तप्रकोष्ठो मिलनातुरो यक्षो निवेदयति—यद् गर्जितं महीमुद्भूतकन्दलिकामवन्ध्यां कर्तुं शक्नुते तज्जनस्य श्रवणसुखकरं ते गर्जितं श्रुत्वा मानसं विहायान्यत्र गता हंसाः पुनर्मानसं गन्तुमुन्मनसो बिसकिसलयानां छेदैः पाथेयवन्तो गगने भवतः कैलासपर्वतपर्यन्तं सयात्रीभविष्यन्ति। यक्षस्तु सहाय इति पदं प्रयुङ्क्ते। सहायः सयात्रस्यार्थेऽपि प्रयुज्यते। शब्दार्णवानुसारं सहायस्तु सयात्रः स्यादिति। विक्रमोर्वशीये राजा पुरुरवा सूतं रथमुपश्लेषयितुमाज्ञापयति। राजा नाट्येन रथमारोहति। तं विलोक्यानिन्द्यसुन्दरी सा सुराङ्गना सख्या सह निष्क्रामति। उर्वशीमार्गोन्मुखो राजा मदनस्य दुर्लभाभिनिवेशित्वं स्मरन् उर्वश्या शरीरात् स्वमनसः कर्षणं राजहंस्या खण्डिताग्रान्मृणालात् सूत्रकर्षणमिव मन्यते। हंसानां पङ्क्तिसौन्दर्यं भारतस्य कवीनां मनस्तथाविधं चकर्ष

यथान्यदेशीयकवीनामिति संकेतयति हांस-हेंसगनः। वर्षारम्भे दक्षिणं विहाय पुनरपि ते मानसरोवरं गन्तुमभिलषन्तीति पूर्वमेव निर्दिष्टम्। हिमाचलस्तेषां स्वदेशः। हांसहेंसगनो रघुवंशस्य त्रयोदशसर्गे व्यवहृतं प्रियमानसानां खगानामिति पदमपरनामरूपेण पश्यति। इदन्तु हंसानां कालिदासीयवर्णनं न त्वभिनवसंज्ञानम्। मानसप्रिया हंसा इति बहुधा दर्शितम्। अस्मिन् श्लोके कविर्यमुनातरङ्गैर्भिन्नप्रवाहाया गंगायाः सौन्दर्यं वर्णयति। क्वचिद् राजहंसानां नीलहंससंसर्गवती पङ्क्तिरिव सा आभाति।

## सप्तदशं प्रवचनम्

हंसानां नीरक्षीरविवेकः प्रख्यातः। संस्कृतेतरभारतीय-भाषास्वपि हंसानां गुणोयं श्लाघितः। कालिदासस्याभिज्ञान-शाकुन्तले षष्ठाङ्के राज्ञ उक्तौ इदं स्पष्टीभवति। राजा नेपथ्यादागतं ध्वनिं शृणुते यत्र माणवकः केनापि त्रिभङ्गी-क्रियते। श्रुत्वा राजा साहाय्यार्थं सशरं धनुर्गृह्णाति। कुपितो भूत्वा कथयति—भोः तिरस्करिणीगर्वित! मदीयं शस्त्रं त्वां द्रक्ष्यति। एष तमिषुं संदधे, यो वध्यं हनिष्यति, रक्ष्यं द्विजं च रक्षिष्यति। अत्र राज्ञा हंसस्य नीरक्षीरविवेकोऽदृश्य-व्यक्तेरुद्बोधनार्थं निर्दिष्टो भवति। हंसः क्षीरन्तु आदत्ते, परं तन्मिश्रा अपो नैव। अपस्तु वर्जयति।

हंसचिह्नानां वस्त्राणि व्यवह्रियन्ते स्म। रघुवंशे सप्तदश-

सर्गेऽतिथिर्वर्ण्यते। असावामुक्ताभरण आसीत्। स्रग्वी आसीत्। हंसचिह्नदुकूलवान् आसीत्। राज्यश्रीवधूवरः सोऽतिशयदर्शनीय आसीदिति। कुमारसम्भवे वर्णितं कलहंसलक्षणं दुकूलं पूर्वमेव निर्दिष्टम्।

चक्रवाकार्थं चक्रो रथाङ्गो रथाङ्गनामेति पदानि व्यवहृतानि। भारतोयकवीनां काव्येषु, पुरातनेषु मध्यकालिकेषु नवीनेषु च चक्रवाका दृश्यन्ते। स्त्रीलिङ्गे चक्रवाकी। कुमारसम्भवस्याष्टमसर्गे शंकरोऽभौमं पार्थिवञ्च सुखमनुभूय गन्धमादनगिरिं न्यवर्तत। सायंकाल आसीत्। सौवर्णशिलातलमाश्रयं कृत्वा नेत्रगम्यं भास्करमवलोक्य सव्यबाहुव्यपाश्रयां पार्वतीं सायंकालिकदृश्यं वर्णयामास। तत्र चक्रवाकमिथुनस्य क्लेशोऽपि वर्णितो विद्यते। चक्रवाकश्चक्रवाकी च दष्टं कमलकेसरं त्यजतः। विपरिवृत्तकण्ठौ क्रन्दतः। इत्थं निघ्नयोश्चक्रवाकयोः सरसि स्तोकमपि व्यवधानमनल्पतां गतम्।

रघुवंशे दिलीपस्य प्रयत्नात् रघुः प्रतिदिनं वृद्धिं पुपोष, हरिदश्वदीधितेरनुप्रवेशाद्बालचन्द्रमा इव। कविस्तेषां प्रणयवृद्धिमुद्दिश्य चक्रवाकमिथुनं स्मरति। रथाङ्गनाम्नोरिव दिलीपस्य मागध्याश्च परम्पराश्रयं प्रेम कृतविभागमपि परस्परस्योपरि उपचितमभूत्। रथाङ्गनाम्नी चक्रवाकी। रथाङ्गनामा चक्रवाकः। पुष्पकविमानयात्री रामः पम्पासरसो वर्णनकाले चक्रवाकमिथुनानि न विस्मरति। विस्मर्तुं कथं शक्यते?

विप्रयोगव्यथाग्रस्तानामाश्वासनहेतवो विप्रयुक्ता भवन्ति । पम्पा-सरसि रथाङ्गनाम्नां द्वन्द्वान्यन्योन्यस्मै उत्पलकेसराणि ददति स्म । सीताया दूरावान्तरवर्त्तिना रामेण सस्पृहमवियुक्तानि तानि वीक्षितानि ।

कुमारसम्भवे शिवसमाधिभङ्गार्थं मदनस्य मधोश्च चेष्टानां वर्णनप्रसंगे रथाङ्गनामापि वर्णितः । द्विरेफः स्वां प्रियां भृङ्गी-मनुसरन् कुसुमैकपात्रे मधु पपौ । कृष्णसारः स्पर्शसुखेन निमी-लितनयनां प्रियां शृङ्गेणाकण्डूयत । करिणी रागातिरेकात् कमलरेणुगन्धि मुखान्तर्धृतपयः करिणे ददौ । रथाङ्गनामाऽ-र्धोपभुक्तेन बिसेन प्रियां रथाङ्गनाम्नीं सम्भावयामास । विक्रमो-र्वशीये विप्रयुक्तो राजा हंसोत्पतनानन्तरं प्रियासहायं चक्रवाकं दृष्ट्वा तं प्रष्टुमिच्छति । हे रथाङ्गनामन् ! रथाङ्ग ! श्रोणि-बिम्बया वियुतस्त्वामयं मनोरथशतैर्वृतो रथी पृच्छति । तदनु राजा चक्रवाकस्य तूष्णीम्भावं प्रति क्षुभ्यति उपालम्भपूर्वकम् । कथयति च—कमलिनीपत्रेणापि आवृतकलेवरां सहचरीं दूर-वर्त्तिनीं मत्वा त्वं समुत्सुकः सन् रोदिषि । प्रियानुरागहेतोरेवेयं पृथक् स्थितिभीरुता । किन्तु मदर्थं कथं कान्ताप्रवृत्तिपराङ्मुख-स्त्वम् ? मदीयाऽवस्था तु अत्यर्थं दयनीया । कुमारसम्भवे नगाधिराजो हिमवान् ओषधीनामधिपस्य चन्द्रस्य वृद्धौ समेत-बन्धुः सन् पार्वत्या विवाहदीक्षाविधिं कुरुते । कन्या मंगलस्नान-निर्मलाङ्गी निष्पन्नमेघजलाभिषेका प्रफुल्लकाशा वसुधेव

राजते। तस्या अङ्के शुक्लागुरुर्विरचितः, गोरोचनायाः पत्र-रचनाभिर्विशेषितश्च। सा पर्वतराजकन्या चक्रवाकाङ्कितसैकताया भागीरथ्याः शोभामतीत्य तस्थौ। गोरोचनाचक्रवाकयोः पीतत्वेन साम्यमिति मल्लिनाथः।

चक्रवाका मिथुन एव दृश्यन्त इति हांसहेंसगनस्योहा समर्थनीया। तयोर्नैशवियोगदुःखं कविभिरनल्पबारं संकेतितम्। दिनान्ते शंकरः पादाग्रस्थितान् शुद्धैर्जलैर्विहिताघ्यान् विधिज्ञान् तपस्विनः प्रत्युमाया ध्यानमाकर्षति येऽभिसन्ध्यं शुद्धये गायत्रीं गूढं जपन्ति स्म। सोऽपि नियमार्थं प्रस्तुत उमाया अनुमतिं काङ्क्षते, विनोदनिपुणसखीजनेभ्यो वल्गुभाषिणीं समर्प्य। शैलराजतनया शंकरवाचि अवधीरणासहितं विजयया सहाहेतुकमालपितुमारभते। दिनात्ययोचितं सन्ध्याविधिं गायत्रीमन्त्र-पूर्वं शिवश्चकार। अभाषमाणां पार्वतीमुपेत्य तस्याः कोपपरिहारार्थमसौ स्वं चक्रवाकसमवृत्तिं जगाद। चक्रवाकसमवृत्ते-रर्थो मल्लिनाथेनानन्यसङ्गित्वं कृतोस्ति। रात्रौ तयोर्वियोगस्तु भवत्येव परं हृदये सहैव तिष्ठतः। अभिज्ञानशाकुन्तले षट्पद इव दुष्यन्तः शकुन्तलाधररसपानार्थं तस्या मुखमुन्नमयितुमिच्छति। शकुन्तलाऽभिलषन्त्यपि नाट्येन परिहरति। अकस्माद् नेपथ्ये चक्रवाकवधूः सहचरम्मन्त्रयितुं प्रेर्यते यतो रजनी समागता। अन्यत्र शार्ङ्गरव ओदकान्तं स्निग्धजनोऽनुगन्तव्य इति स्मारयति। तत्र शकुन्तला सखीमनसूयां कमलिनीपत्रैः प्रच्छन्नमपि प्रिय-

मपश्यन्ती विकला चक्रवाकी रोदितीति निवेदयति। अनसूया शकुन्तलामाश्वासयामास। चक्रवाकी अपि प्रियेण चक्रवाकेन विना विषादेन दीर्घतरां निशां गमयति। वियोगस्य दुःखं गुरु, परमाशाबन्धस्तद् लघूकुरुते। कविः चक्रवाकमिथुनस्य संयोग-दौर्लभ्यमिदं लक्ष्यीकृत्य प्रेमिकहृदयाकुलत्वं कालयापनाक्षमत्वं च चित्रितवान्। मालविकाग्निमित्रे राजा स्वप्रेयसीमाभरणा-लंकृतामनतिलम्बिदुकूलनिवासिनीं पश्यति परं दूरत एव। परिव्राजिका धारिणी च तत्रोपस्थिते। राजा सव्रीडमशोकवृक्ष-मभिपरिक्रामति, चेतसि मालविकासंयोगकामेनातुरः सन्। सन्निधिविप्रयोगमिमं कविः राज्ञो मुखात् चक्रवाकयोर्दौर्भाग्यो-ल्लेखेन स्पष्टीकुरुते। राजा रथाङ्गनामा इव, प्रिया मालविका चक्रवाकी इव। धारिणी निशावदननुज्ञातसम्पर्का विद्यते।

कादम्बो हंसभेदः। मल्लिनाथानुसारं नीलहंसोऽस्ति। ऋतुसंहारे हेमन्तवर्णने स्वच्छतोयानि सुशीतलानि सरांसि सोन्मादकादम्बविभूषितानि वर्ण्यन्ते। जाह्नव्याः यमुनासंयोग-सुषमां वर्णयन् कविः प्रियमानसानां खगानां कादम्बसंसर्गवतीं पङ्क्तिं संकेतयति। यमुनातरङ्गैर्व्यामिश्रप्रवाहिणीमपि।

चकोराणां स्थानमपि भारतीयभाषाणां साहित्ये अनुपेक्ष-णीयम्। कालिदासस्य काव्येषु कामिनीचक्षुःसौन्दर्यवर्णनकाले ते निर्दिष्टा विद्यन्ते। रघुवंशे तामरसान्तराभां विधातुर्ललितां सृष्टिमाकृतिलोभनीयां भोज्यामिन्दुमतीमुद्दिश्य दौवारिकी सुनन्दा षष्ठे सर्गे 'चकोराक्षि, इतो विलोकयेति' उक्तवती।

# अष्टादशं प्रवचनम्

क्रौञ्चः संस्कृतकाव्यस्येतिहासेऽविस्मरणीयः। आदिकवेः काव्यनिर्माणप्रेरणास्रोतोऽयम्। वनाभ्यासे चरन्तमनपायिनं क्रौञ्चयोश्चारुमिथुनकं पुमांसं वैरनिलयो निषादः शोणितपरीताङ्गं चकार; सध्रीचीं क्रौञ्चीं रुदतीं निशम्यादिकवेर्हृदयं दुद्रुवे। 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितमिति' श्लोकादनुष्टुप्छन्दः समागतम्। महाकविना कालिदासेन ऋतुसंहारे क्रौञ्चानां वर्णनं विहितम्। वसन्तेऽन्यस्मिन् ऋतौ वा स्वकूजितेन जनस्य मनसि माधुर्यसञ्चारकाः पक्षिणो बहवः, परं शीततौ जनानन्दकारिविहगाः कति सन्ति? ऋतुसंहारस्य चतुर्थसर्गस्य पञ्चमसर्गस्य च श्लोकान् हांसहेंसगनः स्वनिबन्धे संकेतयति। हेमन्ते

शालिफलानां प्राचुर्यम् । ग्रामसीमाबहिःस्थानानि तैश्चितानि। मृगाङ्गनानां यूथैर्विभूषितानि । मनोहरैः क्रौञ्चैर्निनादितानि च । एवंविधानि सीमान्तराणि चेतांस्युत्सुकयन्ति । सर्गसमाप्ति-श्लोकेऽपि क्रौञ्चनादो दिश्यते । हिमयुक्तः कालो बहुगुणैर्योषितां रमणीयश्चित्ताकर्षकश्च । परिणतैर्बहुसंख्याकैः शालिभिर्ग्राम-सीमानो व्याकुलाः । कालोऽयं हेमन्तो विनिपतिततुषारः क्रौञ्च-नादेनोपगीतश्च । पञ्चमसर्गारम्भेऽपि क्रौञ्चाः स्मर्यन्ते । शिशिर-संज्ञकः कालोऽत्र वर्णितः । क्षितिः प्ररूढशालीनामीक्षूणां च चयैरावृता । क्वचित् स्थितानां क्रौञ्चानां निनादै राजितोऽयं शिशिराख्यः कालः । मदनस्य प्रकामता विद्यते । प्रमदाजनस्य प्रियोऽयम् ।

तदनु हांसहेंसगनो गृहबलिभुजं निर्दिशति । मेघदूतस्य श्लोकोऽत्र तेन सूचितो यत्र गृहबलिभुजां कुलायारम्भैर्ग्रामेषु चैत्यानि आकुलानि जायन्ते । गृहबलिभुजः काकादिग्रामपक्षिणः । काकशब्दः कालिदासस्य कृतिषु केवलं काकपक्ष एवोपलभ्यत इति हांसहेंसगनस्य सूचनाऽनुपेक्षणीया । रघुवंशे पदमिदं कविना व्यवहृतम् । तृतीयसर्गे रघोर्बाल्यं वर्ण्यते । मनोः शासनानुसारं रघोश्चूडाकर्मसंस्कारो निष्पन्नः । प्रथमे तृतीये वाऽब्दे करणी-योऽयमिति शास्त्रवचनम् । तदनु पञ्चमं वर्षं प्राप्य चलकाक-पक्षकैर्वयस्यैरमात्यपुत्रैरन्वितोऽसौ पञ्चाशद्वर्णात्मिकां लिपि यथावद् गृहीतवान् । एकादशसर्गे रामस्य बाल्यशौर्यं वर्णितम् ।

स्योक्तिः सार्वभौमिकी। मधुं सम्बोध्य रतिर्मदनदहनभस्म कपोतकर्बुरमिति वक्ति। विक्रमोर्वशीये मालविकाग्निमित्रे च पारावतपदमपि हांसहेंसगनः संकेतयते। मालविकाग्निमित्रे वैतालिको मध्याह्नं सूचयन् पारावतानामत्यर्थतापात्सौधनिवासाशक्ततां दिशति।

मयूराणां नृत्यमपि भारतीयकाव्येषु बहुभिः कविभिर्वर्णितम्। कालिदासस्य रचनासु यत्र-तत्र मयूरा दृश्यन्ते। रघुवंशे प्रधाविताश्वो राजा तुरगसमीपादुत्पतन्तमपि रुचिरकलापं मयूरमुद्दिश्य बाणं न मुमोच। मल्लिनाथानुसारं मह्यामतिशयेन रौतीति हेतोरसौ मयूरपदाभिधेयः। कुमारसम्भवे हिमाचलसौन्दर्यवर्णने शिखण्डिनां बर्हाः स्मर्यन्ते। भागीरथीप्रवाहस्य शीकराणां प्रापकोऽस्ति हिमाचलस्य पवनः। देवदारून् पुनः पुनः कम्पयते च। शिखण्डिनां बर्हाणि भिन्नानि कुरुते। रघुवंशे सुखस्पर्शैः शालनिर्यासगन्धिभिर्वातैः सेव्यमानौ दिलीपः सुदक्षिणा च स्निग्धगम्भीरनिर्घोषं स्यन्दनमारुह्य गुरोराश्रमं गच्छतः। मार्गे रथनेमिस्वनं श्रुत्वा मेघागमनशंकया शिखण्डिन उन्नमितमुखा भवन्ति। तेषां केकास्तौ शृण्वन्तौ गच्छतः। के मूर्ध्नि कायन्तीति केकेति मल्लिनाथः। केका वाणी मयूरस्य इत्यमरकोषः। कुमारसम्भवे शशिनः प्रभावैशिष्ट्यं वर्ण्यते। सा गिरिशिखरेषु उन्नतस्थानेषु तिष्ठति। रजन्यास्तमस्तु निम्नस्थानप्रवणम्। वेधसा गुणदोषयोरात्म-

सदृशी गतिः प्रकल्पिताऽस्ति। हिमालयश्चन्द्रकिरणैर्जनितप्रसरैश्चन्द्रकान्तमणीनां जलबिन्दुभिः मेखलाद्रुमेषु निद्रां गतान् शिखण्डिनोऽसमये बोधयति। मल्लिनाथः शिखण्डिग्रहणमितरशकुन्तानां कुलायनिलयत्वात्स्पष्टयति। मालविकाग्निमित्रे परिव्राजिका दुष्प्रसहानीकं दिशन्ती आपार्ष्णिलम्बिशिखिबर्हकलापधारीति पदं प्रयुङ्क्ते। रघुवंशे विलासिनीनां वर्णने द्वन्द्वचरान् निर्दिश्य कविरुत्कलापैः प्रस्निग्धकेकैस्तटबर्हिभिः सुन्दरीणां गीतानुगवारिमृदङ्गवाद्यस्याभिनन्दनं बभाण। अस्मिन्नेव काव्ये षष्ठसर्गे कलापिनां नृत्यस्यौद्धत्यं निर्दिश्यते। तेषां पुरोपकण्ठे उपवनाश्रयत्वमपि। न केवलं क्रीडामयूरा वनबर्हिणोऽपि काव्यविषयत्वं गताः। अयोध्याया अधिदेवता पुरो दौर्गत्यं वर्णयती यष्टिनिवासभंगाद् वृक्षेशयानां मृदङ्गशब्दापगमान्नृत्तविरहितानां दवस्फुलिङ्गाहतशेषबर्हाणां क्रीडामयूराणां वनबर्हिणत्वप्राप्तिं सूचयति। मयूराणां ध्वनिः संस्कृतकाव्येषु बहुधा कविभिरवर्णि। कालिदास इन्दुमत्या अजपौरुषप्रमुदिताया ह्रियं वर्णयन् नवैरम्भःपृषतैरभिषिक्तायाः स्थल्या मयूरकेकाभिर्निष्पन्नमभ्रवृन्दाभिनन्दनं दिदेश।

# ऊनविंशतितमं प्रवचनम्

महाकवेः कालिदासस्य रचनासु विवधजन्तूनामुल्लेखो दृश्यते । जलचराणां, स्थलचराणां, खेचराणाञ्च । न केवलं मानवप्रकृतिकृतिचित्रणेषु महाकविरसौ दर्शयामास स्वप्रतिभा-श्रैष्ठ्यं, मर्त्यलोकाधिवासिनामपरजन्तूनामपि वर्णनेऽसौ स्वकं प्रतिभावैशिष्ट्यं स्पष्टयामास ।

हांसहेंसगनेन कालिदासस्य कृतिषु जलचरानुद्दिश्य यो निबन्धः प्रणीतोऽस्ति तस्यारम्भ एव रघुवंशमहाकाव्यस्य तिमिं प्रति पाठकानां ध्यानं समाकर्षति । रामाभिधानो हरिर्वैदेहीं मलयपर्यन्तं वानरनिर्मितसेतुना द्विधा कृतं फेनवन्तं सागरं दर्शयन् तस्य रूपस्येदृक्तया इयत्तया वा दुर्निरूपत्वं निर्दिशन्, तरङ्गाधरदानचतुरस्य मुखार्पणप्रकृतिप्रगल्भायाश्चुम्बनं वर्णयन्

तस्यानन्यसामान्यकलत्रवृत्तिं स्पष्टयन् तिमीनामुल्लेखं कृतवान्। अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः। तिमिङ्गिलो गिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव इति हेमाद्रिः। शतयोजनमायतः पाठोऽपि लभ्यते। राम उवाद—अमी तिमयो व्यात्तानत्वात् ससत्त्वं सरिन्मुखाम्भ आदाय सम्मीलयन्तः सरन्ध्रैः शिरोभिर्वारिप्रवाहानूर्ध्वं वितन्वन्ति।

समुद्रो यादसाम्पतिरिति कथ्यते। कालिदासो यादसामप्युल्लेखञ्चकार। अमरकोषानुसारं यादांसि जलजन्तवः। मल्लिनाथानुसारं जलग्राहः। हांसहेंसगनोऽर्थममुं समर्थयति।

विक्रमोर्वशीये चतुर्थाङ्के करिमकरो दृश्यते। करिमकरस्यार्थेऽनैक्यं विद्यते। मातङ्गनक्रस्य व्याख्यापि नास्त्येकविधा। रघुवंशेऽम्बुराशिं वर्णयन् रघुनन्दनो मातङ्गनक्राणां जलक्रीडां वर्णयति। सहसोत्पतद्भिर्मातङ्गनक्रैः समुद्रस्य फेना विभज्यन्ते, तेषां कपोलेषु संसर्पणेन कर्णक्षणचामरा भवन्ति। मल्लिनाथीयटीकायां मातङ्गनक्रस्यार्थोऽस्ति मातङ्गाकारो ग्राहः। हेमाद्रिव्याख्यायां जलगजो निर्दिष्टः। चरितवर्धन एकस्मिन् स्थाने द्वन्द्वसमासं गृह्णाति अन्यत्र जलहस्तिनम्।

नक्रग्राहगोधानामुल्लेखो रघुवंशे मालविकाग्निमित्रेऽभिज्ञानशाकुन्तले वा कृतोऽस्ति। रघुवंशस्य सप्तमसर्गे संवृतमत्सरा बहिःप्रसन्ना नृपा गूढनक्रह्रदा इव वैदर्भमामन्त्र्य तदीयां पूजामुपायनमिषेण प्रत्यर्प्य जग्मुः। रघुवंशस्य षोडशसर्गे कविर्ग्रीष्म-

कालिकां ऊर्मिलोलोन्मदराजहंसनीरामपकृष्टनक्रां रोघोलता-पुष्पवहां सरयूं वर्णयति । कोपविलोहिताक्षस्य त्रैलोक्यनाथस्य कार्यान्तरमानुषस्य प्रभवस्य कुशस्य तरस्वितां वर्णयन् असौ ह्रदार्थमुद्वृत्तनक्रमिति पदं प्रयुङ्क्ते । नक्राणां निवासः सरित्सु जलाशयेषु च । करी कमलवनं दृष्ट्वा मकरभीत्या कामनावरोधं न कुरुते । मालविकाग्निमित्रे राज्ञो वचनमत्र स्मर्त्तव्यम् । नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गज इति । अभिज्ञानशाकुन्तले षष्ठाङ्के विस्रगंधी गोधादी मत्स्यबध इति श्यालेन कथ्यतेऽङ्गुलीयक-दर्शनविमर्शनपूर्वम् । सपङ्कमण्डूकभेकदर्दुराणामपि वर्णनं कविना कृतम् । ऋतुसंहारे सपङ्कतोयात् जलाशयादुत्प्लुत्य भेकस्तृषा-तुरस्य सर्पस्य फणमातपत्रं विधाय तस्याधःप्रदेशे निषीदति ।

कविना मत्स्यानामुल्लेखो रघुवंशे ऋतुसंहारे चाकारि । अजस्य सैन्यबलं वर्णयन् लिलेख—वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धानि सैन्यरजांसि पिबन्तो मत्स्याकारा ध्वजाः परित आविलानि नवजलानि गृह्णन्तः परमार्थमत्स्या इवासन् । ऋतुसंहारे गजैः सरः समुत्क्षिप्ताशेषमृणालवृन्दं विपन्नमीनं पलायित-भीतसारसं निविडविमर्दकर्दमञ्च क्रियते । रघुवंशे षोडशसर्गेऽन्योन्यकेयूरविघट्टिनीभिः सनूपुरक्षोभपदाभिरङ्गनाभिरुद्विग्नहंसां सरितं वर्णयित्वा परस्परसेचनतत्पराणां कामिनीनामभिलाष-दर्शी नौसंश्रयः कुशो गृहीतचामरां किरातीं प्रति दुर्वहश्रोणि-पयोधरत्वात्कायमुद्वोढुमसमर्थानां जलक्रीडापरायणानां शिरीष-

प्रसवावतंसेभ्यः शैवालप्रियाणां मीनानां प्रवञ्चनं वर्णयते। मीनाः शैवाललोलाः। शैवालं जलनीली। कुमारसम्भवस्याष्टमसर्गे पार्वती शिवं कनकतामरसेन ताडयति तस्य कराक्षिप्ताम्बुनाक्षीणि विनिमीलयति, गङ्गां प्रविश्य जलक्रीडां करोति, मीनपङ्क्त्या द्विगुणितमेखला सती। जालोपजीविनां जीविका विगर्हिता। आनायिमात्स्यिकमत्स्यबन्धजालोपजीविधीवरपदानि प्रयुक्तानि रघुवंशेऽभिज्ञानशाकुन्तले च। षष्ठेऽङ्के—'सूचक, मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुलीयस्यागमः।'

कुमारसम्भवे मेघदूते ऋतुसंहारे च शफरीणां वर्णनं द्रष्टव्यम्। देहविसर्जनार्थं समुद्यतां मन्मथप्रियां रतिं कुमारसंभवे आकाशवाणी अनुकम्पितवती, जलाशयस्य शोषेण संत्रस्तां शफरीं प्रथमं वर्षमिव। अमरकोषानुसारं शफरी प्रोष्ठी च समानार्थके। ऋतुसंहारे शरदृतौ नदीनां गमनमान्द्यं वर्णयन् कविस्ताभ्यश्चञ्चन्मनोज्ञशफरीरसनाकलापाः पर्यन्तसंस्थितसिताण्डजपङ्क्तिहारा विशालपुलिनान्तनितम्बबिम्बा इति विशेषणानि प्रयुङ्क्ते। अभिज्ञानशाकुन्तले रोहितस्योल्लेखो भवति।

ऋतुसंहारस्य द्वितीयः सर्गो द्रष्टव्यः। धूसरं विशेषेण पाण्डुरं कीटरजस्तृणान्वितं भुजगेन तुल्यं वक्रगतिप्रसर्पितं ससाध्वसैः भेककुलैः निम्नस्थानाभिमुखं नवोदकं निरीक्षितं भवति।

रजतशुक्तिन्यायो भारतीयदर्शने सुविख्यातः। रघुवंशे

आत्मनः पदं पुष्पकविमानेन विगाहमानः सन् रामाभिधानो हरिः स्वोक्तौ सैकते भिन्नशुक्तिपर्यस्तमुक्तापटलं फलावर्जित-पूगमालं पयोधेः कूलं वर्णयति ।

राघवस्तत्रैवोर्मिवेगात्पर्यस्तं विद्रुमप्ररोहैः प्रोतमुखं शङ्ख-यूथं तस्य क्लेशादपसरणं च निर्दिशति । ऋतुसंहारे तृतीया-ध्याये गगनमुज्झितजलैं रजतशंखमृणालवद् गौरवर्णैर्वायुवेग-चञ्चलैर्घनैः चामरशतैरुपवीज्यमानो राजेव दृश्यते । शंखार्थं जलजमपि प्रयुज्यते । 'जलजं शङ्खपद्मयोः' इति विश्वः । रघुवंशस्य दशमसर्गे आपाण्डुरत्विषो गर्भिण्यो राजपत्न्यः स्वप्नेषु जलजाऽसिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिर्वामनैः आत्मानं रक्षितं ददृशुः । सप्तमसर्गे अजः प्रियोपात्तरसेऽधरोष्ठे जलजं निवेश-यति ध्माति च । रणारम्भे रणावसाने शङ्खध्वनिर्भवति स्म । जलजशङ्खयोश्चित्रणममङ्गलापहारि मन्यते स्म ।

## विंशतितमं प्रवचनम्

डुकृञ्करणे मरणे सन्निहिते सति जीवात्मानं रक्षितुं न शक्ष्यतीति सत्यं परं व्याकरणज्ञानं विरहय्य कैवल्याप्तिसाधकानां सन्मार्गदर्शकाणां शिवेतरविमोचकानां कल्याणसरणिविधायकानां नानाविधशास्त्राणां ज्ञानं न प्रवर्त्तते। व्याकरणाध्ययनात् शास्त्रकाराणामाशयः प्रत्यक्षीभवति आवहति च तदनु शर्म, सुखं, सामरस्यञ्च, प्रभवन्ति चाध्येतारश्चिकीर्षितमन्वेष्टुम्। संसारेऽस्मिन्नसारेऽनुपयुक्तपदार्थैराकृष्टं चेतो वाव्रज्यते, सास्मर्यते च तानेव गरलदातॄन्, दुःखाशनिभिस्ताड्यमानमपि नोपरज्यते, कामनानां मरौ दन्दह्यते। पीयूषं कुत्रान्वेष्टव्यम्? प्राप्तभगवदनुग्रहाणामृषीणां कलिमलप्रध्वंसिनीषु वाक्षु। ता व्याकरणमन्तरा सम्यङ् नावगम्यन्ते, व्याकरणाधीतिनो बहुविधशास्त्राणामनु-

शीलनक्रियाभिर्विशङ्कञ्चेतः सुखायते। मनीषित्वाय शब्दानु-शासनस्योपयोगिताऽविसंवादिता विद्यते। ननु व्याकरणशास्त्राणां पदव्याख्यानेषु सर्वत्र साम्यं नावलोक्यते, परं पाणिनीयं व्याकरणं विद्वद्भिर्मूर्धन्यतमं गीयते, अनुसरन्ति च ग्रन्थकारास्तदीयसूत्राणि सबहुमानम्। महाप्रतिभाप्रभावः कात्यायनो, गोनर्ददेशप्रभवो महावैयाकरणः पतञ्जलिः, प्रदीपकारः कैयटः, उद्योतकारो नागेशभट्टश्च सुरवाण्या व्याकरणस्याध्येतॄणां शब्दावगमसौविध्यार्थं यान् ग्रन्थान् प्रणिन्युस्तानुद्दिश्य तर्कावकाशो विद्वद्भिर्लभ्यतेऽद्यापि। जर्मनदेशीयो वैयाकरणः पाउलथीमो महाभाष्यस्योपोद्घाते शब्दानुशासनप्रयोजनानि उद्दिश्य पतञ्जलिकृतविवेचनेषु समुपलब्धं वैदिकमन्त्रव्याख्यानं प्रति विदुषां ध्यानमाकर्षति। महामुनिं यास्कं पतञ्जलिर्नोपेक्षिष्ट तस्य पद्धतिमपि अन्वसार्षीत्, परं सर्वत्र तयोरर्थसाम्यं नावलोक्यते।

भाष्यं व्याचिकीर्षुर्मुनिरसौ शब्दानुशासनस्य प्रयोजनानि ग्रन्थस्योपोद्घातेऽतनिष्ट इति व्याकरणविदुषां विदितमेव। तत्र ऋग्वेदान्मन्त्रा गृहीताः शब्दानुशासनस्य महिमानं स्पष्टयितुम्। आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणमिति निर्दिश्य वैदिको मंत्रो निर्दिश्यते। चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यान् आविवेश॥ इति। नैरुक्ताणां व्याख्यानात्पतञ्जलेर्व्याख्याऽत्र भिन्ना। चत्वारि शृङ्गाणि सन्ति पदजातानि। नामाख्यातोप-

सर्गनिपाताश्च । धातवो धातुरूपाणि चाख्यातसंज्ञकानि भवन्ति । अविकार्यश्चादयो निपातसंज्ञकाः । पादाः कालरूपाः । त्रयः कालाः । भूतभविष्यद्वर्तमाना इति । द्वे शीर्षे । द्वौ शब्दात्मानौ । नित्यः कार्यश्च । सप्तहस्तासो अस्य । सप्तविभक्तयः । प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमीति । त्रिधा बद्धः कथम् ? महाभाष्यानुसारं त्रिषु स्थानेषु बद्धः वृषभोऽयम् । त्रिषु स्थानेषु कुत्र ? उरसि कण्ठे शिरसीति । महो देवो मर्त्यान् आविवेश । महान् देवः कः ? पतञ्जलिः शब्द इति गृह्णाति । महान्देवः शब्दः मर्त्यान् मरणधर्मणो मनुष्यान् आविवेश । इत्थं निर्वर्ण्य सिद्धान्तं स्थिरीकरोति । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् । उद्योतकारो भाष्यार्थमित्थं विवृणोति । महान् देव अन्तर्यामिरूपः शब्दो मर्त्यानाविवेश । स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम् । महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवति । पदजातानि किम् - परापश्यन्तीमध्यमावैखरीरूपाणीति । हरिवचनव्याख्यातृशब्दोद्धरणाद् भाष्यकारस्य मतं पुनरपि विवृणोति । तत्रान्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः । तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीन् अत्यन्तं संसृज्यते ।

चत्वारीति पदादारब्धमपरमृङ्मन्त्रमुद्धृत्य भाष्यकारः शब्दानुशासनप्रयोजनानि पुनरपि व्याचष्टे । 'चत्वारि वाक्-

परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥' चत्वारि वाक्परिमिता पदानि । भाष्यकारानुसारं चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । उद्योते परापश्यन्तीमध्यमावैखर्यः बोध्यन्ते । पतञ्जलेर्भाष्यं स्पष्टीकुर्वन् नागेशभट्टो वैयाकरणस्तु शास्त्रबलेन तद्बललब्धयोगेन च गुहाऽन्धकारं विदार्य सर्वं जानातीति भावं द्योतयते ।

आचार्यस्य यास्कस्य निरुक्ते पदव्याख्यानमन्यादृशं दृश्यते । पतञ्जलिर्निरुक्तं जानाति स्मेति तस्य महाभाष्यपङ्क्तयः सूचयन्ति । आचार्यधीमो महावैयाकरणस्यास्य मन्त्रव्याख्यानशैल्यां यास्कस्य पद्धतेरनुवर्त्तनं पश्यति । पतञ्जलिर्यास्कमन्वेति, परं पदव्याख्यानस्वातन्त्र्यं रक्षन् । द्वयोरेव स्थानं संस्कृतवाङ्मयेऽत्युच्छ्रितम् । द्वावेव पदार्थान् ज्ञापयतः । एको वेदस्याविदितपदानामर्थं ग्राहयति, ज्ञापयति च मन्त्राणां वैशिष्टयम् । अपरो वैयाकरणमूर्धन्यः शब्दानुशासनशास्त्रे अध्येतॄणां मनीषां प्रवेशयति, पाययति च श्रमसाध्यं व्याकरणज्ञानरसम् । शब्दशास्त्रक्षेत्रे विद्वांसो द्वावेव प्राच्यजगति प्रतीच्यजगति च निषेवन्ते, सभाजयन्ति च । बह्वायाससाध्यवेदार्थोपपत्त्यर्थं यास्कस्य निरुक्तं बहुधा साहाय्यप्रदम् । ऋग्वेदस्य चतुर्थमण्डलस्य पूर्वोद्धृतो मन्त्रो यास्केनापि व्याख्यातः । दृष्टिभेदस्त्वत्र सुस्पष्टः । तदनुसारं चत्वारि शृंगा वेदाः । त्रयोऽस्य पादा इति सवनानि त्रीणि ।

द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सन्ति सप्त छन्दांसि । त्रिधा बद्धोऽयं वृषभो मन्त्रब्राह्मणकल्पैः । एनमृग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति । एष हि महान् देवो यद्यज्ञो मर्त्यानाविवेश । यास्कस्य व्याख्यानुसारमेष महान् देवो मरण-धर्मान् मनुष्यान् यजनार्थमाविशति । यास्कपतञ्जल्योर्मन्त्र-व्याख्यानसाम्यं भेदश्च प्रतिपद्येते । यास्कस्य मते याजनमेव श्रैष्ठ्यं भजते, यतो वेदानुसारं सुविद्वांसो यज्ञं विश्वतोधारं वितेनिरे । प्रश्नः समुदेति, पूर्वोद्धृतमन्त्रे—चत्वारि वाचः परिमितानि पदानि कानि ? यास्कोऽत्र भिन्नानि मतानि प्रतिजानीते । ओंकारो महाव्याहृतयश्चेत्यार्षम् । नामाख्याते चोपसर्गनिपाता-श्चेति वैयाकरणाः । अत्र पूर्वतनवैयाकरणानामेव मतं पतञ्ज-लिना प्रकटितं, न तु मौलिकतां समाश्रित्य वेदार्थो मन्त्रितः । वैयाकरणानां मतोल्लेखोऽयं यास्कपतञ्जल्योः कालविप्रकर्षं नाभिसूचयते । याज्ञिका अर्थं कुर्वन्ति — मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकी । परं नैरुक्तानां व्याख्या त्वन्या । ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः । अत्रापरेषां मतं निर्दिश्यते । सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकी इत्येके । ब्राह्मणात् स्वव्याख्यां निरुक्तकारः स्पष्टी-कुर्वन् स्वमतं पुष्णाति । तदनुसारं ब्राह्मणा देवानां वाचं वदन्ति, मनुष्याणाञ्च ।

पतञ्जलिर्यास्कस्य निरुक्तं जानाति स्मेत्यत्र शंकावकाशं

महाभाष्ये भाष्यकारः स्वयमेव निरस्यति। पाणिनीयव्याकरणस्य तृतीयाध्यायस्य तृतीयपादस्य प्रथमं सूत्रमुणादयो बहुलं विवेचयतस्तस्य स्वमतप्रतिपादनार्थं नैरुक्तानामुल्लेखः स्मृतिपथं समानेतव्यः। नाम खल्वपि धातुजम्। एवमाहुर्नैरुक्तकारा इति। आचार्यंथीमस्य कथनं साधु प्रतीयते यन्महाभाष्यकारो यास्कस्यार्थप्रतिपादनशैलीं शब्दशो नानुसरन्नपि तस्य भावग्रहणपद्धतिं न विजहाति। परं तयोरसंगतिरपि न विस्मर्त्तव्या। वेदार्थप्रतिपत्तये उभावेव समाधत्तः। सन्दर्भेऽस्मिन् भाष्यकारस्य सुदेव इति पदस्य व्याख्यानमध्येतारोऽनुशीलयेयुः। ऋग्वेदस्य मन्त्रमसावुदाजहारोति विदितमेव पाणिनीयव्याकरणविदुषाम्।

सुदेवो असि वरुण यस्य ते सप्तसिन्धवः।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥

व्याकरणानुशीलनस्य महत्त्वातिशयमत्रापि व्याख्याने सुष्ठु प्रतिपन्नम्। परं यास्कस्य व्याख्यातो यास्कदर्शितवर्त्मनश्च भाष्यकारः स्पष्टतो व्यत्येति।

# एकविंशतितमं प्रवचनम्

वेदार्थविषयकं विशयमपाकर्तुं यैर्विपश्चिद्भिः पुराकालेऽयत्यत तेषु यास्काचार्यः प्रथमपांक्तेय इति प्राचां वेदार्थाधिजिगमिषूणां मतमर्वाचां विदुषां मतान्न भिद्यते। विप्रवादबाहुल्येऽपि निरुक्तादनुसन्धित्सव उपक्रियन्त एव। वेदार्थपरिनिश्चयार्थं, मन्त्राणामर्थयाथार्थ्यविनिश्चयार्थं पेशलमतेर्यास्कस्य कृतिरेवान्त्यमाप्तवचनं स्यादिति चेत्, न। अर्थं बोद्धुमभियुक्तैरुपायान्तराण्यपि सेव्यन्ते। व्याकरणमध्येयमिति प्रदिदर्शयिषोर्महर्षेः पतञ्जलेर्मन्त्रव्याख्यानं यास्कोपदर्शितमर्थावबोधविधिमनुसरदपि तस्माद् बिभिदे इति तु स्पष्टम्। शब्दानुशासनप्रयोजनानि प्रकल्पयता भाष्यकारेण वरुणस्तुतिविषयको मन्त्र उदाहृतोऽस्ति। मन्त्रस्यार्थं विशदीकुर्वता ग्रन्थकर्त्राऽलेखि—'सुदेवो असि वरुण'

सत्यदेवोऽसि 'यस्य ते सप्त सिन्धवः'—सप्तविभक्तयः, 'अनु-क्षरन्ति काकुदम्' काकुदं तालु। काकुः जिह्वा, साऽस्मिन्नुद्यत इति काकुदम्। 'सूर्म्यं सुषिरामिव'। तद्यथा—शोभनामूर्मिं सुषिरामग्निरन्तःप्रविश्य दहति, एवं ते सप्त सिन्धवः सप्त विभक्त-यस्तालवनुक्षरन्ति। तेनासि सत्यदेवः। सत्यदेवाः स्यामेत्य-ध्येयं व्याकरणम्। मन्त्रव्याखयानेऽस्मिन् सुदेवस्यार्थः कः? भाष्यकारानुसारं सुदेवोऽस्ति सत्यदेवः। यास्कानुसारं सुदेवोऽ-स्ति कल्याणदेवः। व्याख्याभिन्नत्वमिदमुद्दिश्याचार्यथीमेन यद् विवेचितं तदनुसारं सत्यदेव इति पदे तत्पुरुषसमासः कर्म-धारयो वा भवितुं नार्हति; बहुव्रीहिसमासोऽयम्। नैरुक्तानां मन्त्रव्याख्याऽप्यत्रावधार्या। सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण यस्य ते सप्तसिन्धवः सिन्धुः स्रवणाद् यस्य ते सप्त स्रोतांसि तानि ते काकुदमनुक्षरन्ति। सूर्मि कल्याणोर्मि स्रोतः सुषिरमनु यथा।

पतञ्जलेर्व्याख्यानुसारं सप्तसिन्धवः सन्ति सप्तविभक्तयः। ननु विभक्तेरर्थः कः? पाणिनीयव्याकरणानुसारं सुप्तिङौ विभक्तिसंज्ञौ स्याताम्। अष्टाध्याय्याः प्रथमाध्यायस्य चतुर्थ-पादे विभक्तिश्चेति सूत्रं वीक्ष्यते। सुप्तिङौ विभक्तिसञ्ज्ञौ स्त इति सिद्धान्तकौमुदीकारः। ननु कथमेतत् सप्तविभक्तिव्याहारः। स्पष्ट एवात्र विभक्त्यर्थः। यास्कानुसारं सप्तसिन्धवः सन्ति सप्त स्रोतांसि। अनुक्षरन्ति काकुदमिति पदप्रयोगाद् भाष्यकार-

स्यार्थो बलीयान् भवति। परमाचार्यथीमानुसारमुपध्नोऽयं बाह्यत एवार्थद्योतनक्षमः। प्राक्तनस्थलेषु मन्त्रोऽयमुदाह्रियते, परं सप्त-विभक्तीनां सङ्केतो दृष्टिपथं नायाति। मैत्रायणीसंहितायां वरुणस्याकूपारेण साम्यमैक्यं वा निर्दिश्यते। 'समुद्रो वै वरुणः। सुदेवो असि वरुणः।' द्वयोर्व्याख्यानयोरन्तरमध्येयम्।

सुदेव इति पदस्य कल्याणदेवः कमनीयदेवो वेत्यर्थो यास्कस्यान्यत्रकृतव्याख्यानमृजुभावेनान्वसार्षीत्। उदाहरणानां नैयून्यं न विद्यते। वैदिकमन्त्रोऽस्ति—तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन् स्वदया सुजिह्व। मन्मानि धीभिरुत यज्ञ-मृन्धन् देवत्रा च कृणुह्यध्वरं नः॥ अर्थं व्याचिख्यासुर्निरुक्तकार इत्थं ज्ञापयाञ्चक्रे—तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान् मधुना समञ्जन् स्वदया कल्याणजिह्व। मन्त्रोऽस्ति—उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम्। श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो धर्मस्तदु षु प्र वोचम्॥ अत्रापि सुहस्त इति पदं निरुक्तकारः कल्याणहस्त इति व्याचष्टे। एवमेव विभिन्न-मन्त्रव्याख्यानेषु सुपाणिः कल्याणपाणिना, सुवासः कल्याण-वाससा, सुवीरः कल्याणवीरेण, सुदात्रेतिपदं कल्याणदानेन, सुमङ्गलः कल्याणमङ्गलेन, सुसारथिः कल्याणसारथिना, सूर्मिः कल्याणोर्म्या, सुमतिमितिपदं कल्याणीं मतिमितिपदाभ्यां निरुक्त-कारः विशदीचकार। पतञ्जलिरप्यनेनैव विधिनाऽर्थं प्रत्याय-यति। आचार्यथीमोऽत्रापि कतिपयानि पदानि निरदिक्षत्।

कल्याणस्थाने भाष्यकारः शोभनमिति पदं प्रयुङ्क्ते । उदाहरणार्थं सुहृषदित्यत्र शोभना हृषदोऽस्य, सुमुखी इत्यत्र शोभनं मुखमस्याः, सुगन्ध इत्यत्र शोभना अस्य गन्धा इति, स्वाध्याय इत्यत्र शोभनमध्ययनमिति । एवमेव शोभनार्मूमिमिति । स्वाध्यायस्य व्याख्येयं विशिष्टमवधानमर्हति ।

ननु सुदेवस्य कोऽर्थोऽवगन्तव्यः ? सत्यदेव उत कल्याणदेव उत शोभनो देवः । वेदाभ्यसिषूणां कृते मन्त्राणार्थावबोधो नास्ति सुकरस्तेषां विशिष्टभाषानिबद्धत्वात् परं सुदेव इति शब्दस्तु सरलः विप्रतिपत्तेरनवकाशात् । अन्यत्र कृतशब्दार्थानुसारं भाष्यकारश्चेत् सुदेवं कल्याणदेवस्थाने शोभनो देव इति व्याख्यास्यत् तर्हि आचार्यथीमस्य मते व्याख्येयं स्वाभाविकी अभविष्यत् । अन्यत्रापि शोभनो गार्ग्योऽतिगार्ग्य इति पदानि निभाल्यन्ते । परमशोभनप्रकृष्टाणामाशयस्तु प्रायशः समानः । समसनार्थमाचार्यथीमेन सङ्केतित सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति पाणिनीयसूत्रं शोभनदेव इति पदं समर्थयत इति चेत्, न ।

भाष्यकारः सुदेवस्यार्थविशदीकरणार्थं सत्यदेव इति पदं प्रयुयुज इत्यत्र व्याकरणाध्ययनस्य प्रयोजनं विशदीकुर्वता तेन सप्तविभक्तय इत्यर्थं द्रढयितुमयतय्रतेत्याचार्यथीमः । सत्यदेव इति पदात्पतञ्जलेर्विवक्षितं किम् ? षष्ठीतत्पुरुषोऽयं शब्द उत कर्मधारयः ? जर्मनदेशीयो विद्वानसौ भाष्यकारस्यैवोक्त्या शब्दं

स्पष्टयितुमयतिष्ट । सत्यदेवः स्यामिति अध्येयं व्याकरणम् । अमुष्य मतेऽत्र तत्पुरुषस्य कर्मधारयस्य वा सम्भावना तर्कयितुं न शक्यते, पदमिदं बहुव्रीहिरेव भवितुं शक्नोति । सत्यं येषां देवस्ते सत्यदेवा इति । ऋग्वेदेऽनृतदेव इति पदं निर्दिशन्नसौ स्वमतं द्रढयति । एवमेव श्रद्धादेव इति पदमप्यत्रार्थविगमे साहाय्यं विदधाति । तैत्तिरीयोपनिषदि प्रयुक्तानि पदान्यपि न विस्मर्त्तव्यानि । मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भवेति ।

उद्योते नागोजिभट्टः सत्यदेव इति पदं व्याचिख्यासुः सत्येन दीव्यति, द्योतत इति यौगिकोऽयं शब्दस्तथाऽन्येष्वपीत्यर्थं इत्यब्रवीत् । प्रदीपकारेण शब्दोऽयं स्वत एव स्पष्टार्थं इति मत्वा न व्याख्यातः । समासनिर्धारणेऽत्र असंगतिर्व्यत्यासश्च स्यातामिति चेत्, न । सत्यं येषां देवस्ते सत्यस्य देवा भवितुमर्हन्ति । उभावेवार्थौ खलु प्रतिपन्नौ ।

संस्कृतन्तु पुराकालिकभारतीयविपश्चिद्भिः सत्यस्य वागित्यमन्यत । सप्तविभक्तयः संस्कृते व्यवह्रियन्ते । सुराणां भाषितं संस्कृतमेवेति मन्यते स्म । अतः सप्तसिन्धवः सप्तविभक्तयो वा काकुदमनुक्षरन्तीति पतञ्जलेर्भाष्ये प्रयुक्तं देवपदमत्रावधेयम् । तव सप्तसिन्धवः सप्तविभक्तयस्ताल्वनुक्षरन्ति, तेनासि सत्यदेवः । कैय्यटस्य व्याख्याऽत्र चर्चामपेक्षते—यतो हेतोर्व्याकरणज्ञानाद् वरुणः सत्यदेवस्ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः ।

नद्य इव विभक्तयः। ताल्वनुप्राप्य प्रकाशन्त इति।

यास्कस्य सूर्म्या सुषिरामिवेति पदयोर्व्याख्यानं त्यक्त्वा पतञ्जलिनाऽन्य एवार्थो गृहीत इत्यस्य हेतु निर्दिशन्नाचार्यथीमः काकुदमितिपदं क्लीबलिङ्गे प्रयुज्यमानस्य भाष्यकारस्य स्खलितमुपदर्शयति। अमुष्य मते काकुदः स्त्रीलिङ्गे द्वितीयाविभक्तौ काकुदमिति रूपं संवृत्तम्। भाष्यकारो निरुक्तकारेण अन्यथोपदिष्ट इति। काकुदमिति क्लीबलिङ्गप्रयोगस्तदनु कोशेषु कोशकारैरग्राहि। सूर्म्या सुषिरामिव इत्यस्य भाष्यकारकृतव्याख्यानस्य विशदीकरणार्थमाचार्यथीमः संस्कृतवाचि निहितां शक्ति प्रति संस्कृतज्ञानामास्थां निरदिक्षत्, महाभारतस्य श्लोकपंक्तिमुदाहरन्। संस्कृतवक्तुः काकुदेऽग्निर्ज्वलति। आदिपर्वणि पौष्यस्य उदङ्कस्य च कथा विद्यते। पौष्य उदङ्कं प्रत्युवाच—नाहं शक्तः शापं प्रत्यादातुं नहि मे मन्युरद्यापि उपशमं गच्छतीति। किमेतद् भवता न ज्ञायते।

'नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निहितस्तीक्ष्णधारः।
विपरीतमेतदुभयं क्षत्रियस्य वाङ् नवनीतं हृदयं तीक्ष्णधारम्॥'

## द्वाविंशतितमं प्रवचनम्

मनुस्मृतिरद्यापि बहुसंख्यकानां भारतीयानां जीवनपद्धते-र्नियामिका विद्यते। रचनानन्तरं बह्व्यः शताब्द्यो व्यपगतास्त-थापि साम्प्रतमपि भारतीयानामार्याणां सामाजिकजीवनं ग्रन्थेना-नेन भृशं नुद्यमानमवलोक्यते। जन्मन आरभ्य जीवनावसानस्य मुहूर्तं यावद् भूयो भूयो मनुस्मृतिरनल्पसंख्यकानां भारतीयानां पारिवारिकसामाजिकक्रियाकलापान् संयच्छति। अश्रद्दधाना नैद्र-तन्द्रा अपि स्मृतिमनुसृत्य जीवनशर्वरीं कथञ्चिद् यापयन्ति। जर्मनदेशीयो विख्यातो दार्शनिकः फ्रीडरिख-वोन-नीट्शे ग्रन्थ-मिममूनविंशतिशताब्द्यां लेभे, पपाठ चाष्टाशीत्यधिकाष्टशताधिक-सहस्रतमे ख्रिस्तीयाब्दे। स नासीत् संस्कृतज्ञः, संस्कृतस्य केवलमारम्भिकं ज्ञानं तेनोपार्जितमासीत् परमोत्साहेन; भारतीय-

धर्मदर्शनानां तस्य ज्ञानमासीदतीव सीमितम्। शोपेनहावरेण, रिचार्डवाग्नरेण, सतीर्थ्येन पाउलदेवसेनेन च संगत्य भारतीय-चिन्तनपद्धतिं स यत्किञ्चिदज्ञासीत्। संस्कृतज्ञानाभावात् मूल-मनुस्मृतिं संस्कृतभाषायां पठितुन्तु स न शशाक, परं विदुषां सौभाग्यवशादासीत्तदा फ्रांसदेशीयभाषायां ग्रन्थस्यास्यानुवाद उप-लब्धः। अनुवादमिमं भूयसा यत्नेन पठित्वा पश्चिमीय जगतो दार्शनिकोऽयं, यस्य कृतयोऽनल्पसंख्यकानां वाचकानां चेतांस्य-दूदुलन्, सिद्धान्तवैचित्र्याद् बहुसंख्यकमानवान् यस्य जनाभिभावि-जीवनदर्शनमदीदिपद्, यस्यानुगामिनो जगज्जिगीषाबलावलेपश्च इतिहासो न विस्मरिष्यति, स्वरचनासु मनुस्मृतिमुद्दिश्य स्वकान् विचारान् प्रकटयामास। मौलिकस्य मनुना प्रचोदितधर्मप्रचार-कस्य, मनुमहर्षिणा समर्थितनीतिप्रतिपादकस्य, स्मृतेर्विशुद्धरूप-स्याधुना दर्शनं न भवति; प्रक्षिप्तांशा बहुश उपलभ्यन्ते। नीदृशे मनुस्मृतेर्यस्य भागस्य विशिष्टमध्ययनञ्चकार सोऽस्ति वर्णव्य-वस्थापरकः। वर्णव्यवस्थामुद्दिश्य नानाविधभ्रान्तयो न केवलं भारताद् बहिरेवापितु भारतवर्षस्याभ्यन्तरेऽपि प्रतायन्ते।

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'—इति कथयन् भगवान् वासुदेवोऽपि चातुर्वर्ण्यस्याधारभूते गुणकर्मणी एव निगदितवान्। नीदृशे वर्णव्यवस्थायाः शास्त्रोपन्यस्तव्याख्यामज्ञा-त्वैव वर्णव्यवस्थामुद्दिश्य यत्किञ्चिल्लिलेख तद् वर्णव्यवस्था-गवेषकः समुपेक्षेत। समदर्शिता श्रुत्यनुगामिचिन्तनपद्धतिं भूयो

भूयो नोदयति । बाह्यभेदान् समुपेक्ष्य यः साधको विद्याविनयाभ्यां सम्पन्ने ब्राह्मणे, मातृवज्जगतः परिपालिकायां गवि, शक्तिसामर्थ्यस्थौल्यसम्पन्ने करिणि, अप्रतिष्ठापात्रे शुनि, श्वपाके च समदर्शी भवति स एव भगवतो वासुदेवस्य मते पण्डितो, न तु द्विजत्वाहंकारभरितचेता विद्वान् ।

संस्कृतभाषाऽनभिज्ञताहेतोः स्मृतिप्रतिपादितवर्णव्यवस्थां नीट्शेऽवगन्तुं न शशाक । परं तथापि स यत्किञ्चित् शुश्राव, यत्किञ्चिद् जज्ञौ, तेन परिप्रेरितः भारतीयब्राह्मणान् भृशमश्लाघिष्ट । तस्य दृष्टौ भारतीयदर्शनानि पश्चिमीयजगतो दर्शन य समानान्तरवर्त्तीनि सन्ति । सप्ताशीत्यधिकाष्टशताधिकसहस्रतमे ख्रिस्तीयाब्दे स स्वके उषेति नामके पुस्तके भारतीयानां ब्राह्मणानां धार्मिकसूक्ष्मदर्शितां भृशं प्रशशंस । चतुःसहस्रवर्षपूर्वं भारतवर्षे मनीषिभिर्यच्चिन्तितमासीत्, चिन्तनपद्धतेर्योऽद्भुतविकासो बभूव, अज्ञानतिमिरविदारणपरकचेष्टासु या प्रगतिः सञ्जाता, तत्सर्वं दार्शनिकोऽयं भूतार्थव्याहृतिं मत्वाऽश्लाघिष्ट ।

मनुस्मृतिं नीट्शे प्राणमयस्य जीवनोपासकस्यार्यधर्मस्याप्रतिमं ग्रन्थं स्वीचकार । मनुस्मृतौ वर्णितायां वर्णव्यवस्थायां स भ्रान्तिवशात् स्वकीयजीवनदर्शनानुकूल्यमद्राक्षीत् । ब्राह्मणानां सर्ववर्णपूज्यतायां दार्शनिकोऽसौ शक्तिवृद्धिसंकल्पं ददर्श । तत्र तस्य बलावलेपमुपेयुषी कल्पनैव विजृम्भते । सर्वमूल्यानां मूल्यान्तरमिति नामिकायां रचनायां स मनुस्मृतिं पुनरपि

श्लाघते । तन्मतानुसारं कृतिरियमुच्चतमस्तरस्यानुपमेयरचनास्ति । अस्याः पृष्ठभूमौ वास्तविकं दर्शनं विद्यतेऽस्यामपि काशते वास्तविकं दर्शनम् । सर्वविधमनोविज्ञानवेत्तारोऽपि ग्रन्थेऽस्मिन्ननवद्यं बौद्धिकखाद्यं प्राप्स्यन्ति । अत्र जीवनं प्रत्यास्थाया भावो दीप्यते, विजयोल्लासपूर्णानन्दस्य भावो, न तु पलायनस्य । समग्रपुस्तकोपरि दृश्यते सूर्यालोकः । महारम्भप्रणयिनोऽस्य चिन्तकस्य दृष्टावत्र निर्दिष्टाः सिद्धान्ता जीवनसंगरे आश्रयणीया यत्नेन निग्राह्याश्च ।

इत्थं मनुस्मृतिं प्रशंसन् स वर्णव्यवस्थां प्रकृतिसम्भूतां निजगाद । मानवसमाजस्य वर्णविभाजनं प्रकृत्या निष्पन्नं न मनुना । तत्र वर्णिता विवाहपद्धतिर्विशेषतो गान्धर्वविवाहः, सुरापाननिषेधो, वृद्धोपसेवनं, नारीणां समादरप्रभृतयो दार्शनिकस्यास्य ध्यानं विशेषेणाकृष्टवन्तः ।

'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥

तन्मतानुसारमासीत् स्मृतिप्रचोदितधर्माचरणपरायणानां समग्रं जीवनं परलोकदृष्ट्याऽनुप्रेरितम् । नास्ति व्याख्येयं मिथ्या । यतोऽभ्युदयस्य निःश्रेयसस्य च सिद्धिः स एव धर्म इत्युदीरितगिरं महर्षिं तस्य वैशेषिकदर्शनञ्च क उपेक्षेत ?

शक्तिकामनाभिधरचनायां नीट्शे मनुस्मृतेराधारभूमिं स्वजीवनदर्शनेन सह समन्वेतुं चेष्टते । चेष्टेयं मिथ्या ! विदुषां

शस्त्रचालकानाञ्च सामाजिकशक्तिवर्धनार्थं नैव स्थापितासीद् ब्राह्मणक्षत्रियविट्शूद्राणां वर्णव्यवस्था। अपरिग्रहस्त्यागश्च ब्राह्मणानां धर्मः। शक्तिकाम्यया परिग्रह उपचीयते न त्यागः। बलावलेपादागांस्युपचीयन्ते, न तपःस्वाध्यायौ। जर्मनदार्शनिको हेगेलो भारतीयानां सामाजिकव्यवस्थामसन्तोषकरीमस्वस्थाञ्च मेने, परं नीट्शे तस्यां स्वदर्शनप्रतिपादितायाः शक्तिकामनाया एव प्रस्फुटनं दृष्ट्वा तृप्तिमनुबभूव। कालयोगेन वर्णव्यवस्थाया महत्त्वं व्यपगत, सा निरर्थकाऽन्तस्सारशून्या संजाता, परमुद्गमकाले तस्या हेतुर्ब्राह्मणानां शस्त्रधारिणाञ्च शक्तिकामना नासीदिति वक्तुं शक्यते। वशीकृतविद्वन्मण्डलो ग्रन्थोऽयं दृष्टिसंकोचं भर्त्संयाञ्चकार। युगे युगे धर्मस्य बाह्यरूपं परिवर्ततेऽपास्तसंकीर्णतादोषस्य स्मृतिकारस्येयं स्पष्टा घोषणा—

'अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः॥'

## त्रयोविंशतितमं प्रवचनम्

केवलं नित्यनैमित्तिककर्मणामनुष्ठानेनैव, केवलं तपश्चर्या-निरलज्ञानविज्ञानास्तिक्यपरायणत्वेनैव, केवलं वैराग्यसाधनयैव न भवति पार्थिवास्तित्वस्य सौन्दर्यप्रस्फुटनं, न सम्पद्यते जीवन-यात्रायाः सार्थकत्वम् । धर्मार्थकाममोक्षाभिधपुरुषार्थचतुष्टयस्य भारतीयशास्त्रकाराणां मते विद्यते मर्त्यलोकेऽस्मिन्ननिवार्यत्वम् । युक्ताहारविहारस्य कर्मसु युक्तचेष्टस्य धर्मार्थकाममोक्षाभिधसा-ध्यसाधनोपासकस्यैव नरस्यैहलौकिकी पारलौकिकी च श्रेयःसिद्धिः संजायते । सनातनत्वाद् धर्मस्य मोक्षस्य च श्रेष्ठत्वं संशीति-रहितम् । परमर्थकामौ धर्ममोक्षयोरुपलब्धिमार्गे उपसर्जनवदेवो-पेक्ष्येते । शास्त्रेष्वमीषां समन्वयात्मिका बुद्धिः प्रशस्यते । मोक्षार्थं सन्धार्यमाणायां धियामर्थकामौ न प्रसज्येत इति दृष्टेरेकाङ्गि-त्वमशिवाय कल्पते ।

कौटिल्यस्यार्थशास्त्रं भारतीयवाङ्मयस्यानर्घरत्नमिव। क्षेत्रेऽस्मिन् पुराकाले भारतवासिभिर्यत्प्रगतिरकारि तस्य परिचयो बहुविधसंस्कृतग्रन्थैः प्राप्यते परं कौटिल्याभिधविष्णुगुप्तशर्मणा प्रणीतो ग्रन्थो विशिष्यते। नवाधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे यदा दक्षिणभारतीयपाण्डुलिपिगवेषणापरायणः श्यामशास्त्रिमहोदय आचार्यकौटिल्यप्रणीतमर्थशास्त्रं प्रकाशितवांस्तदा पश्चिमीयजगति संस्कृतविदुषां समाजेऽभिनवक्षितिज उदमेषीत्। सुप्रथितस्य परं कालवशाच्चक्षुर्विषयातिक्रान्तस्य ग्रन्थस्यास्य प्रकाशनं पश्चिमीयविदुषां मनांसि भृशमप्रीणयत्। ग्रन्थस्यास्य प्रणेता नासीत्कश्चिदेकान्तवासी स्वप्नद्रष्टा, स आसीत् सुप्रथितस्य मौर्यसाम्राज्यस्य संस्थापकस्य गुरुर्मन्त्री चेति परम्परागतविश्रम्भकारणाद् बभूव पश्चिमीयसंस्कृतज्ञानां हृदयं जिज्ञासाप्लावितम्। ख्रिस्ताच्चतुःशतकपूर्वतनभारतस्य राजनीतेरर्थनीतेश्चैवंविधं सुस्पष्टं वर्णनमन्यत्र दुर्लभमासीत्। कौटिलीयमर्थशास्त्रमिदं सम्राजश्चन्द्रगुप्तस्य महामन्त्री विष्णुगुप्ताभिधः पण्डितः प्रणिनाय, परम्परागतामास्थामिमां विरुरुधिरे केचिद् विद्वांसः। लब्धकीर्त्तेर्भारतीयसाहित्यस्येतिहासस्य प्रणेता विटरनीत्सोऽपि मन्तुं न शशाक, यदर्थशास्त्रस्य रचयिता स एवासीद् यस्य मन्त्रणा मौर्यसाम्राज्यप्रसृतेर्दृढीकरणाय आधारभूता बभूव। महामुनिना पतञ्जलिना स्वके प्रथिते महाभाष्ये मौर्याणां निर्देशस्तु कृतश्चन्द्रगुप्तस्य शासकस्य सभाया अपि, परं कौटिल्यमुद्दिश्य मुनिरयं मौनमेवाङ्गीचकार, न

कुत्रापि किञ्चिदपि लिलेख। कारणादस्मादाचार्योऽयं शङ्का-कुलमनसा परम्परागतामास्थामिमामक्ष्मायिष्ट। एवंविधा अपि विद्वांसः सन्ति ये कौटिल्याभिधस्य चन्द्रगुप्तमन्त्रिणोऽस्तित्वमेव प्रत्यादिशन्ति। यूनानदेशीयराजदूतः सुविख्यातो मेघस्तनीयोऽपि स्वके यात्राविवरणे कौटिल्यमुद्दिश्य न किञ्चिदपि लिलेख; बहूनन्यविषयान् सविस्तरं वर्णयाञ्चकार परमेतावन्तं गुरुप्रभावं परमोच्चपदासीनं कौटिल्यमुद्दिश्य जोषं तस्थौ। श्यामशास्त्रिणः कौटिलीयार्थशास्त्रस्य प्रकाशनात्पूर्वमेवाष्टाधिकनवशताधिकसहस्र-तमे ख्रिस्तीयाब्दे हिल्लब्रान्तनामकोऽनुसन्धाता घोषयामास यन्महामन्त्री कौटिल्यः स्वयमेव ग्रन्थमिमं रचयाञ्चकारेति पर-म्परागतमान्यता प्रतिपत्तियोग्या नास्ति; कृतिरियं कौटिल्यस्य संप्रदायस्य रचना।

कृतिमिमामुद्दिश्य योहान्न-याकोब-मायराख्यो विद्वान् षड्-विंशत्यधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्देऽर्थशास्त्रस्य जर्म-नानुवादसहितं ग्रन्थमेकं लाइप्सिगनगरस्य ओटोहारासोवित्स-नामकसुविख्यातप्रकाशनसंस्थानात् प्रकाशितवान्। ग्रन्थेऽस्मिन् विद्वानसौ कौटिल्यकृतिं न केवलं मुहुर्मुहुः श्लाघते, बहु मन्यते न केवलं तस्या रचनाप्रक्रियामसौ मेघस्तनीयमौनतामपि स्पष्टी-कुरुते। यूनानदेशीयस्यास्य प्रणिधेर्विवरणात्मिका कृतिर्नास्ति पूर्णत उपलभ्या। अनुपलब्धविलुप्तभागेषु स्यात् कौटिल्यस्य नामगुणकीर्तिनिर्देशः। किंस्विच्चाणक्यो मेघस्तनीयस्य भार-तागमनात् प्रागेव स्वर्जगाम। किंस्विच्चाणक्यस्याप्रतिमोग्र-

ताकारणात् स्वभावस्यावारणीयसामर्षत्वात् महीभुजाचार्यः स्वपदाच्च्यावितः । सन्दर्भेऽस्मिन् मायरो विस्मार्कस्य जीवनगाथां निर्दिशति । समीक्षकाणामत्र विद्यतेऽन्याप्यापत्तिः । अर्थशास्त्रे लभ्यते कौटिल्य इत्यभिधानं, केवलं ग्रन्थस्यान्ते नन्दवंशोत्पाटकस्य विष्णुगुप्तस्य ।

'येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥
दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यञ्च ॥'

किं स्वयं कश्चित् पुमान् स्वं कौटिल्यमित्यभिधातुमुत्सहते ? शङ्कामिमां मायर्सः समादधल्लिखति यत् शिष्याः समस्तदेशेषु गुरुभ्य उपाधिनाम ददति । स्मृतिषु गुरोर्नामकथनं निषिध्यते । कौटिल्यशिष्यव्यवहृतं नाम ग्रन्थस्य कौटिल्यकृतित्वं न खण्डयति, न समापयति तस्यैतिहासिकं गुर्वर्थम् । ब्राह्मणत्वकारणादासीच्चाणक्योऽध्यापनवृत्तिकोऽपि प्रजानामधिपस्य महामन्त्र्यपि । मायर्समतानुसारं कौटिल्याभिधानं नास्त्यवक्षेपः । विष्णुगुप्तेति नामास्ति सुलभं, सर्वे विष्णुगुप्तसंज्ञका भवितुं शेकुः, परं कौटिल्यस्त्वासीत् स केवलमेकल एव ।

भारतीयराजनयमुद्दिश्य प्रणीतेषु पुस्तकेषु कौटिलीयार्थशास्त्रस्य महत्त्वं सर्वे विदेशीयविद्वांसः स्वीचक्रुः । क्षेत्रेऽस्मिन् ग्रन्थस्यास्य परमोपयोगिता सिद्धा । कामन्दकशुक्रविदुरवैशम्पा-

यननीतिशास्त्राणामुपयोगिता नास्ति विवादास्पदम्, परमैतिहासिकतथ्यानि कौटिलीयार्थशास्त्रं यथोद्घाटयति तथा नान्ये ग्रन्थाः। भारतीयसाहित्यस्य लब्धकीर्तिरितिहासकारो विंटरनित्सो मनुते यच्छास्त्रमिदं पुराकालिकभारतीयसंस्कृतौ, पुराकालिकभारतस्य वास्तविके जीवने च यथाऽऽलोकं निक्षिपति तथा न काचिदन्या कृतिः।

मायर्सः कौटिल्यस्य कृतिं कृतिकारञ्च प्रशंसन् लिखति यदसौ स्वप्नद्रष्टा नासीत्, असावासीत् साम्राज्यचालकः। अन्यत्र सुदुर्लभं वैशिष्ट्यमदृष्टपूर्वा समृद्धिरन्यत्र सुदुर्लभं प्रतिभाबहुमुखत्वं शास्त्रेऽस्मिन् दृश्यते। अतीन्द्रियकल्पना नहि, शोणितसंवलितं पार्थिवजीवनं विद्यतेऽत्र प्रतिष्ठितम्। पार्थिवास्तित्वस्यावमानना नहि, तस्य गौरववृद्धिर्दृश्यतेऽत्र।

भारतीयसंस्कृतौ नास्ति केवलं धर्मस्य मोक्षस्य वा प्रपित्सा, अर्थकामयोरप्यपरिहार्यत्वमवलोक्यते; तथ्यस्यास्य विवेचना स्वशैल्यां विनयकुमारसरकारेण शुक्रनीतिशास्त्रसाहाय्येन पूर्वमेवाकारि। अर्थकामावुद्दिश्य प्रणीतानां पुस्तकानां संख्यालाघवभ्रान्तिस्तु कौटिलीयार्थशास्त्रस्य विनयाधिकारिके प्रथमाधिकरण एवाचार्यवचनेन निरस्यते—'पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्तावितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्।'

# चतुर्विंशतितमं प्रवचनम्

पार्थिवोन्नतिपरायणस्य कौटिलीयार्थशास्त्रस्यांग्लभाषानुवादप्रकाशनात्पूर्वमपि आउफरेख्टनामको जर्मनदेशीयोऽनुसन्धाता टीकादिषु कोषादिषु चार्थशास्त्रीयसिद्धान्तानां क्षीणाभासं प्राप्तवान् । कौटिल्यस्य कृतेः पश्चिमीयजगति प्रवेशः श्यामशास्त्रिप्रकाशितानुवादादेव सम्बभूव, परं चाणक्यस्य नाम विद्वांसो विंशतितमे शतकेऽपि विदन्ति स्म । अशीत्यधिकाष्टशताधिकसहस्रतमे ख्रिस्तीयाब्दे ए० म्यूलरनामको विद्वानरबीं पाण्डुलिपिमेकाममुद्रयद् यत्र गरलस्य बहुविधरूपाणां प्रक्रियाणाञ्च वर्णनं दृश्यते । पाण्डुलिपिरियमासीन्नवशततमं ख्रिस्तीयाब्दमभितः प्रणीता । मूलग्रन्थकारोऽभिधीयते शानकः । शानकोऽयमर्थशास्त्रप्रणेता चाणक्यो भवितुं शक्नोत्यन्यश्चाणक्योऽपि ।

कौटिलीयेऽर्थशास्त्रेऽप्रचलितशब्दानामप्रचलितप्रयोगान् दृष्ट्वा यौलीतिनामको जर्मनदेशीयो विद्वान् यो वित्र्संबुर्गविश्वविद्यालये तुलनात्मकभाषाविज्ञानस्य संस्कृतस्य चाध्यापक आसीद् द्वादशाधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे विषयममुं समीक्षितवान्। प्रश्न आसीदप्रचलितशब्दप्रयोगोऽयं पाणिनिनियमोल्लङ्घनाद् बभूव, पाणिनिसूत्रानभिज्ञताहेतुत्वात्. पाणिनिसूत्रादपि पुरातनत्वाद् वा। एकादशाधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे याकोबी अप्यत्र विवेचयामास। तन्मतानुसारं लिपिकाराणामेवायं दोषो भवितुमर्हति, ग्रन्थकारेऽपप्रयोगदोषारोपणं नास्ति तर्कानुमतं यतो द्वितीयाधिकरणस्य दशमाध्यायेऽसौ स्वयमेव लिङ्गवचनकालकारकाणामन्यथा प्रयोगमपशब्दमिति मन्यते।

चतुर्दशाधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे विएनानगरतो निबन्धः प्रकाशितो बभूव कौटिलीयार्थशास्त्रात् पुरावृत्तम्। निबन्धकारस्य नामासीत् चारपेंतिएन्। हेर्टलाख्यो विपश्चित् शास्त्रस्यास्य साहित्यत्वं विवेचयाञ्चकार। अस्य निबन्धो विएनानगरतो विंशत्यधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे मुद्रितो बभूव।

कौटिलीये शास्त्रेऽस्मिन् वादानुवादात्मिका शैली दृश्यते। शैलीमिमामनुसरन् ग्रन्थकारो भारद्वाजविशालाक्षादीनामन्याचार्याणां मतमुद्धरत्यन्यसम्प्रदायानामपि, मानववार्हस्पत्यादीनां येषामुद्धरणपुरस्सरं खण्डनमवलोक्यते। स्वमतप्रतिष्ठापनार्थं परमतविदूषणशैली नास्त्यदृष्टपूर्वा। तस्या अनुसरणं न केवल-

मर्थशास्त्रेऽस्मिन्नपित्वनल्पसंख्यकेषु शास्त्रीयग्रन्थेष्ववलोक्यते । उद्धरणानीमानि याथार्थ्यानुसारं सन्ति ग्रन्थं सुशोभयितुं वा केवलम् ? प्रश्नमिममुपन्यस्य द्वादशाधिकनवशताधिकसहस्रतमे खिस्तीयाब्दे जर्मनदेशीयः सुविदितोऽनुसन्धाता याकोबी वर्लिन-नगरतः कौटिल्यस्य निर्व्याजत्वमिति नाम्ना निबन्धं प्रकाशित-वान् । याकोबेर्मते आचार्या इमे राजनीतिविशारदा अर्थशास्त्र-धुरन्धराः स्युः परमुद्धरणानि न भवितुमर्हन्ति यथार्थानि । ततः किंकारणेन केन हेतुना वा ग्रन्थस्यास्य प्रणेता तेषां शब्दानुद्ध-रति ? शङ्कामिमां याकोबी समादधाति, शैलीसम्मार्जनहेतुत्वं दर्शयन् । शैलीसम्मार्जनहेतुत्वं व्यङ्ग्योक्त्या कौटिलीयार्थशास्त्रस्य जर्मनानुवादको मायर्सो विरुणद्धि । शैलीसम्मार्जनसंजीवनार्थ-त्वतर्कोऽयमर्थनीतिपण्डितं कौटिल्यं शेक्सपियरमिति घटयति । कौटिल्यो नासीत् शैलीसौन्दर्योपासको, भौतिकाभ्युदयस्य प्रतिष्ठा-वृद्धिकार आसीदसौ शास्त्रकारः । आचार्यशब्दप्रयोगस्यापि विद्वद्भिर्बहुविधनिरूपणं कृतम् । कौटिल्यपूर्वानुवर्त्तिनामाचार्याणां समूहं शब्दोऽयं सूचयतीति याकोबीमतं कौटिलीयार्थशास्त्रस्य मोतीलालबनारसीदासैः प्रकाशितस्य त्रयोविंशत्यधिकनवशता-धिकसहस्रतमखिस्तीयाब्दसंस्करणस्य संपादको यौल्यपि समर्थ-यति । किन्तु मतमिदं जर्मनदेशीयो भारतीयराजनीतेर्लब्धप्रतिष्ठ-लेखको मायरः प्रत्यादिशति । श्यामशास्त्रिदर्शितमाचार्यार्थमपि मायरः प्रत्याख्याति । श्यामशास्त्रिमतानुसारं कौटिल्यः स्वकं

गुरुमेव स्थाने-स्थाने निर्दिशति । ऐतरेयारण्यके, निरुक्ते, पाणिनीयव्याकरणशास्त्रे, वात्स्यायनस्य कामशास्त्रे च शब्दस्य यः प्रयोगोऽवलोक्यते, तेनार्थशास्त्रीयशब्दव्यवहारेण च, मायरः अर्थस्यास्य वितथत्वं साधयति ।

द्वादशाधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे भारद्वाज-विशालाक्षादीनुद्दिश्य तेषामर्थशास्त्रविषयकमतप्रकटीकरणञ्चो-द्दिश्याचार्यो याकोबी यं प्रश्नमुत्थापयामास, तमेवोद्दिश्य षष्ठ्य-धिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्दे फ्रीडरिटव-विल्दोल्भः कौटिलीयार्थशास्त्रे राजनीतिकवादानुवाद इति नाम्ना ओटो-हारासोवित्सप्रकाशनसंस्थानाद् वीसवादननगरतः पुस्तकमेकं प्रकाशितवान् । पूर्वमपि ऊनषष्ठ्यधिकनवशताधिकसहस्रतमे ख्रिस्तीयाब्देऽमुना लाइदननगरस्य प्राच्यार्थव्यवस्थेतिहासपत्रि-कायां कौटिलीयार्थप्रणालीमुद्दिश्य निबन्धः प्रकाशित आसीत् ।

कौटिलीयार्थशास्त्रं नासीदर्थशास्त्रक्षेत्रे प्रथमम् । इतः पूर्वमप्यर्थशास्त्रस्याचार्या आसन् दैवविपाकात कालवशाच्च तेषां कृतयस्तिरोहिताः । कौटिल्यस्यासीदेतद्विषयकः स्वकः सम्प्रदायः । पूर्वाचार्यैर्नासीदाचार्यकौटिल्यस्य सर्वत्र मतसाम्य-मिति तु स्पष्टमेव । अत्र हिल्लब्रान्तनाम्नो विदुषः कृतिः कौटि-लीयार्थशास्त्रं तस्य सजातीयानि चेति कृतिरीक्ष्या । आचार्य-विंटरनित्सोऽपि विषयममुमधिकृत्यामीमांसिष्ट । शास्त्रेऽस्मिन् स्वपद्धत्यनुसारं धर्मार्थकामावाप्तेः पन्थानं दर्शयितुं चिचेष्ट चाणक्यनामधेयोऽसौ ब्राह्मणः ।

'धर्ममर्थं च कामं च प्रवर्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च ।।'

त्रयोदशाधिकनवशताधिकसहस्रतमे खिस्तीयाब्दे आचार्यो योली धर्मशास्त्रमर्थशास्त्रञ्चेति नाम्ना निबन्धमेकमरचयत् । कौटिलीयमतेऽर्थशास्त्रविहितसिद्धान्तानुसरणं न केवलं गुण-राशिनाशिनं दारिद्रयदोषमपाकरोति तदधर्ममपि विलोपयति निषूदयति चाधर्मप्रेरकान् । कौटिलीयार्थशास्त्रं स्वके मौलिक-रूपे विद्यत इति वक्तुं न शक्यते, निवेशितवाक्यानां संभावना नास्त्यसारा । स्वके वर्तमानरूपे नास्त्यर्थशास्त्रमिदं कतिचित्स्था-नेषु धर्मानुमतं निवेशितशब्दवाक्यहेतुत्वादन्यथाविरोधाभास-त्वम् । भारतीयसंस्कृतौ लोकस्यास्यैवाभ्युदयो न गुर्वर्थेऽत एवाऽ-चार्यचाणक्योऽपि ग्रन्थसमापनकाले लोकद्वयस्यावाप्तिमुदीरयति ।

'अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य चे' ति ।

स्वधर्मं स्वर्गायानन्त्याय चासौ मनुते । न केवलंव्यवस्थितार्य-मर्यादां वर्णाश्रमस्थितिमेवासौ श्लाघतेऽरिषड्वर्गत्यागेनेन्द्रियजय-मपि प्रशंसति । कामसेवनं धर्माविरोधेनैवं भूयात् । हिंसावर्ज-नमपि स्पष्टतो विनयाधिकरण उपदिशति । नृपतिः सर्वभूत-हिते रतः स्यात् ।

कौटिलीयार्थशास्त्रसाहाय्येन चतुस्त्रिंशदधिकनवशताधिक-सहस्रतमे खिस्तीयाब्दे लाइप्सिनगरतो ब्रेलोटस्य निबन्धः प्रका-शितोऽभूत् । शीर्षकमासीत् प्राचीनभारते राज्यसञ्चालनम् ।

राज्यसञ्चालनकारिणं राजानन्तस्य शक्तत्वञ्चोद्दिश्यास्मिन्नेव नगरे ऊनविंशशतकस्यान्तिमे भागे कृतिरेकोपाधिपरीक्षार्थं प्रणीतासीत् । कृतेः शीर्षकमासीत् प्राचीनभारतीयशास्त्रानुसारं राजकीयशक्तिः । एनानगरतः प्रकाशिता पुराकालिकभारतीय-राजनय इति शीर्षकवती कृतिरपि न विस्मर्तव्या ।

भारतीयसंस्कृतौ राज्ञो महत्त्वमिति क्षेत्रे आचार्यो हौफ-मानोऽजगवेषत । त्रिपञ्चाशदधिकनवशताधिकसहस्रतमे खिस्तीयाब्दे स्वकं गवेषणापरिणाममलिखच्च । पुराकालिकभारतीय-संस्कृतौ राज्ञो महत्त्वमनाशङ्क्यमेव, परं भोगोन्मुखस्य नहि, त्यागोन्मुखस्य ।

'शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥'

इति रघुवंशकाव्यश्लोकः सन्दर्भेऽस्मिन् सततं स्मरणीयः ।

## पञ्चविंशतितमं प्रवचनम्

विपत्तिरेव महापुरुषाणां महिम्नो निकषः। येऽप्रियसंयोगात् प्रियवियोगाच्च न विचाल्यन्ते, येषां प्रशान्तमनस्कता सुखे दुःखे जयेऽजये चाप्रतिहता विद्यते, तेषामेव महापुरुषपदयोग्यत्वं, नेतरेषाम्। न धन, न जनो, न वपुर्मन एव बन्धमोक्षकारणाज्जीवने सर्वाधिकमहत्त्वपूर्णम्। मनसः शक्तिर्दुरत्यया। वासनाभिचोदितमिदं जगते रूपं प्रयच्छति। आचार्यमोक्षमूलरस्याध्ययनविशालत्वं सुप्रथितम्। बहुविधमौलिकानूदितग्रन्थरचनाभिरस्य प्रमाणं समुपलभ्यते। परं तस्य मनसो विशालत्वं स्वच्छत्वमपि बहुधा नानाविधविपत्तीनामाक्रमणकाले प्रमाणितं बभूव।

संसारेऽस्मिन्नसारे दुःखागारे सर्वाधिकपीडकोऽस्ति प्रिय-

पात्राणामाशारहितो वियोगः। अल्पशक्तिन्त्वेक एवैवंविध आघात उन्मूलयितुं क्षमः। केवलं ज्ञानगरिम्णा भगवत्प्रेम्णा वा मनुष्या एवंविधानाघातान् विषह्य स्वस्थमनस्काः स्थातुमर्हन्ति। आचार्यमोक्षमूलरस्य जीवने प्रियवियोगरूपेण दुर्भाग्यस्य कशाघातोऽनल्पवारमभवत्। परं सुखदुःखयोर्हेयोपादेययोरुभयोरप्युपेक्षणं यस्यां विद्यते एवंभूता सन्मतिस्तमरक्षीत्। कर्त्तृत्वाभिनिवेशेन सर्वविधक्लेशाः समुद्भवन्ति। परिवारान्तर्गतप्रेष्ठव्यक्तीनां निधनान्यपि विदुषोऽस्य चित्तं विकृतिं नानयन्। तस्य धृतिशीलस्यावधारितार्थानुसारिणो धीरत्वञ्चेतसः स्वच्छताञ्च प्रमार्ष्टुं विपदां क्रूरतमोऽप्यशनिपातो नाशकत्। एवंविधा शान्तिर्हृदयस्य काठिन्यं नास्ति, सा जीवनदर्शनस्य स्वच्छतां परिचाययति। तिग्मदशनविपदामाशीविषस्य वदने पतित्वाऽपि स स्वस्थोऽतिष्ठत्।

षट्सप्तत्यधिकाष्टशताधिकसहस्रतमे ख्रिस्तीयाब्दे यदाचार्यमोक्षमूलरः सपत्नीको ड्रेस्डने न्यवसत्, सहसा तस्य ज्येष्ठपुत्री रुग्णाऽभवत् सप्ताहाभ्यन्तरे पञ्चत्वमापत्। पत्न्या सह मोक्षमूलरः पुत्रीमिमां बहु मन्यते स्म। तावास्तां तस्याः शीलगुणं दृष्ट्वा गर्वितौ। जीवनमासीद् ड्रेस्डने चिन्तादुःखवर्जितम्। सर्वतोभावेनासन् सर्वे परिवारसदस्याः सुखिनः। परं सहसाऽभवत् निरभ्राशनिपातः। कन्येयमासीन्मात्रे पित्रे सहायिका, सन्मित्रवत्। षोडशवर्षीयायाः परमस्नेहपात्रस्य कन्याया निधनं

वस्तुतो जीवनोद्यानेऽनभ्रवज्रपात एव। सा स्वबाल्यसुलभ-विलासभङ्गिमाभिस्तयोर्जीवनं सततं सुखयति स्म, चित्तं सन्तोषयति स्म, एधयति स्म चाचार्यमोक्षमूलरस्य कार्यक्षमताम्। परं स्वच्छन्दवर्त्तिना विधिना सा जीवितसमा प्राणकल्पा कन्यापि हृता। अस्यामवस्थायां भवति मानसगगनं घनतिमिररुद्धम्। पीयूषमपि विषायते, युगायन्ते वासराः। अन्वहं यस्याः साहचर्येण जीवनसंगरश्रमो ह्रसिष्ठतामगादेवंविधया कन्यया वियुज्यापि आचार्यमोक्षमूलरस्य विवेको नाध्वंसिष्ट। हृदयमासीद् भग्नं, दीर्घकालं यावत् कार्ये दत्तावधानो भवितुं स नाशकत्, परं विवेकद्युतिस्तस्याविचलिता। आचार्यं लेपसिडसमुद्दिश्य लिखितं पत्रं तत् स्पष्टीकरोति। कन्याया आत्मनियन्त्रणं प्रशंसन् स लिखति—बहुधाऽहं तस्याः सकाशे लज्जे स्म। जीवनमासीत्तस्याः प्रकाशपूर्णं, जीवनजलदानामागमात् प्रागेव सा सुन्दरतरजीवनं प्राविशत्। परमात्मानं प्रति वयं कृतज्ञाः स्मः, यदसौ तां स्वपरमपितृगृहप्रत्यावर्त्तनयोग्यतां, कैशोर्यावस्थायामेव प्रापत्। पूर्वतोऽधिकं विद्यते साऽस्माक, मदीयमवशिष्टजीवनमपि विद्यते तस्याः।

भ्रातृव्यं प्रति लिखिते पत्रेऽपि तस्य मर्मन्तुदव्यथाः स्फुरन्ति, तस्य जीवनदर्शनस्य स्वस्थताऽपि। जगन्नियन्तारं प्रत्यत्रापि स कृतज्ञतां प्रकटीकरोति यदसौ तयोरशेषस्नेहस्य पात्रं कन्यां स्वीकृतवान्। जीवनेऽस्मिन् यद् दुःखं या पीडाऽवश्यम्भा-

विनी विद्यते तया सा विमोचिता। तया केवलमंशुमालिकिरण-स्नातवासन्ती सुषमैवानुभूता। डीन - स्टैनलयं प्रति लिखिते पत्रेऽपि एवंविधभावान् स प्रकटीकरोति। तस्मिन्नेव वत्सरे बालकेभ्यो भाषमाणः स पत्रमिदं समुद्धृतवान्। पत्रेऽस्मिन् तेनालेखि यत् – कैशोर्यामवस्थायामेव तस्य कन्या स्वर्गराज्य-प्रवेशाधिकारिणी अभूत्।...बहुवर्षाणि यावद्वयं कार्यव्यस्ताः संसारेऽस्मिन् नानाविधप्रश्नैः समाकुलास्तिष्ठामः, परमेतत् सर्वं किमर्थम्? शिशुवत्सरलहृदयत्वमङ्गीकार्यम्। वयं स्वबुद्धेः शक्तिं पूर्णस्वातन्त्र्येण सह सत्यप्रेम्णा सह नियोजयेम, परं न विस्मरेम यद् वयं स्मः, यथा न्यूटन उक्तवान्—अपांपतेस्तट-वर्त्तिनः क्रीडारताः शिशवः, सत्यस्य महोदधिस्तु अनधिगतोऽज्ञातोऽनाविष्कृत एव विद्यते।

आचार्यमाश्वासयितुं श्रुतशीलवृत्तवयोभिस्तुल्या न केवलं बान्धवा एवान्येऽपि समवेदनात्मकानि पत्राणि प्राहिण्वन्। सक्सोन्या राज्ञी, आङ्गलदेशस्य राजकुमारी, राजकुमारो लिओ-पोल्दः, रुमेनियादेशस्य राजकुमारी पत्रेण साकं पद्यान्यपि प्रेषयाम्बभूवुः। विपत्तिः सोढुमशक्याऽऽसीत्, परं मोक्षमूलरेण भीतिच्छिदशास्त्राणामध्ययनबलात् शमं नोज्झितम्।

षडशीत्यधिकाष्टशताधिकसहस्रतमे ख्रिस्तीयाब्दे स्वच्छन्द-वर्त्तिना विधिना पुनर्वारं विदुषोऽस्य परीक्षाऽकारि। सितम्बर-मासे सागरतटेऽकस्मादेव तस्य विवाहिता पुत्री कलेवरमत्यजत्।

सा ग्रोक्सफोर्डे बहु प्रशंसिताऽसीत्, सर्वेषां स्नेहपात्रम्। सा नासीत् केवलं प्रखरबुद्धिसम्पन्नैव, तस्याः कायिकसौन्दर्यमप्यासीन्मनोहारि। वार्धकावस्थायां मोक्षमूलरायासावभिनवोऽशनिप्रहार आसीत्। परं विधिनियोगं लङ्घयितुं कोऽस्ति संसारेऽस्मिन् समर्थः? उत्तप्तमरुस्थलनिदाघे भाग्यस्य वारिविप्रुषो भूत्वा हितैषिणां समवेदनापूरितपत्राणि बहुशः समागतानि, परं या हानिः संजाता सासीदपूरणीया। परं विपत्सहस्रेष्वपि न जायते महतां धीरत्ववृत्तेः स्खलनम्। महद्दौर्गत्यं प्राप्यापि तेषां बुद्धिरविचलितैव तिष्ठति। भर्तृहरिणा स्वके नीतिशतककाव्ये सत्यमेव कथितमस्ति यत् श्रेष्ठपुरुषः पतन्नपि दैवात्कन्दुकपातेनोत्पतति, परन्त्वन्यो मृत्पिण्डपतनवत् पतत्युत्पतनेऽसमर्थः।

दुःखस्यास्ति नैजमहिमा। आचार्यमोक्षमूलरः पुत्रीशोकपीडितो महिलामेकां यत्पत्रं प्राहिणोत्, तद् दुःखस्य स्वकं महिमानं स्पष्टीकरोति। प्राणिनामैक्यसम्पादकस्य दुःखस्यागमने सत्यस्माकं समवेदना सुखात्मकक्षणानां सहानुभूतितो गभीरतरा जायते। एवंविधभावमेव स सर-राबर्टकोलित्समाक्सफोर्डाल्लिखिते पत्रे प्रकटीकरोति।

डॉ० होसेडसमुद्दिश्याचार्यमोक्षमूलरो व्यथां प्रकटयन् अलिखत्— भुवि सासीत्सर्वाभिलषितपदार्थसंयुक्ता, क्षणाभ्यन्तर एव सा सुन्दरतरजीवनं प्राविशत्। वाक्येऽस्मिन् मरणार्थम् एवंविधपदप्रयोगो विदुषोऽस्य विचारसरणिं स्पष्टयति। सर

रोबर्ट-मोरिएरमुद्दिश्य लिखिते पत्रे स लिखति—तस्या जीवनादधिकसुन्दरतरजीवनस्य, तस्या निधनादधिकसुन्दरनिधनस्य कल्पनाऽशक्याऽस्ति, दीर्घकालं यावज्जीवनधारणं मतिभ्रमोऽस्ति।

## षड्विंशतितमं प्रवचनम्

प्रतीच्यविद्वदग्रेसरस्य मोक्षमूलरस्य मौलिकग्रन्थाननूदित-ग्रन्थांश्चावलोक्याधीत्य च सर्वे विद्यानुरागिणस्तस्य विद्वत्तां सूक्ष्मदर्शिताञ्च प्रशंसन्ति। परमल्पसंख्यका एव जानन्ति यत् कोविदोऽसौ परमात्मभक्तोऽप्यासीत्। दृष्टजगदतिरिच्य यददृश्यं जगदस्ति तस्यानुध्यानं कृत्वाऽप्यसौ आत्मानं धन्यं मनुते स्म। असौ नासीत् केवलं महापण्डितः, असौ नासीत् केवलं शास्त्र-विज्ञानकौशलभरितहृदय एव, असौ समग्रदृश्यचराचरमतिरिच्य सर्वसञ्चालिकां परमविशुद्धां शक्तिमपि अनुध्यायति स्म। जगद्-गुरोः शङ्करभगवतः श्लोकोऽयमासीदमुष्य जीवने विद्योतितः—

'अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला॥'

केवलं शास्त्राधीतिर्विदुषां वैदुष्यञ्च मुक्तये न सम्पद्यते, तदस्ति भुक्तये । मोक्षमूलरमहोदयस्य पाण्डित्यमासीद् बहुक्षेत्र-व्यापि, तस्य विस्तारं गाम्भीर्यञ्चावलोक्य पण्डिता विस्मिता भवन्ति, परं तस्य साधनायाः क्षेत्रं नासीदत्रैव सीमितम् । प्रेम्णो महिमानं स्पष्टीकर्त्तुं स एकदा पुस्तकमेकमपि प्रणीतवान्, परं तत्र स्वकं नाम न ददौ । पुस्तकमिदं प्रेम्णः सुन्दरं परम-पवित्रं त्यागात्मकं लोकहितकरं विशुद्धं स्वार्थरहितं रूपं प्रकटी-करोति ।

एकदा एकोनाशीत्यधिकनवशताधिकसहस्रतमे ख्रिस्तीय-संवत्सरे जूनमासे अष्टादशतारिकायां श्रीमतीं वेल्बीमुद्दिश्य तेन पत्रमेकं प्रहितं, यत्र एतद्विषयिका तस्य मतिः स्पष्टायते । श्रीमती वेल्बी स्वके पत्रे प्रेम्णो महिमानं प्रकटीचकार, तस्या मते प्रेम्णोऽभावे धर्मसाधना वैयर्थ्यं भजते, तस्या महिमा कर्पू-रायते । विश्वासोपरि विद्यते प्रेम । उक्तिमिमामुद्दिश्य पण्डितो मोक्षमूलरः स्वके पत्रे यं विचारं प्रकटीकृतवान् सोऽस्ति पौनः-पुन्येन पठनीयोऽनुशीलनीयश्च । तस्याभिमते ख्रिस्तमतस्य मूला-धारोऽस्ति प्रेम । प्रेम्णोऽभावे ख्रिस्तमतस्य साधना निरर्थिका जायते । परं तस्याभिमते दुर्भाग्यवशात् ख्रिस्तमतावलम्बिनः स्वयं वास्तविकख्रिस्तमतात् सुदूरं गताः, ये सत्यप्रियाः सन्ति ते जानन्ति यत्तेषामादर्शः कियद्दूरं विद्यते । यदि ख्रिस्तमताव-लम्बिनः ख्रिस्तस्योपदेशानुसारं स्वकं जीवनं यापयेमुस्तदा मानव-

जगतः स्वरूपं परिवर्त्तिष्यते। दाम्भिकीं वृत्तिं त्यक्त्वा पूर्वम स्माभिः स्वीकर्त्तव्यं यद् वयं यत् कथयामस्तन्न स्मः। तदनन्तरं वयं विश्वहितैषिणो भूत्वा सर्वं प्रति प्रेम, दयां, परोपकारवृत्तिं दर्शयिष्यामः।

परमत्रासौ संदिग्धे। रजस्तमोभ्यामाक्षिप्तो मनोमतङ्गजोऽवश्यः। प्रेम्णा इत्थम्भूता साधना सम्भवा स्यान्नवा। तदनु स्वके पत्रे स बहु निगदितं वाक्यमिदं समीक्षते—'ईश्वरोऽस्ति प्रेम।' तस्य मतानुसारमिदमस्ति केवलं भाषाप्रयोगस्वातन्त्र्यम्। आकाशो नीलोऽस्ति, परं नीलिमा नास्त्याकाशः। इत्थमेव परमेश्वरः प्रेमपूर्णोऽस्ति, परं प्रेम एव परमेश्वरोऽस्तीति नास्ति दृढाधारः।

अस्मिन्नेव वर्षे संस्कृतज्ञोऽसौ महत्तमपुरुषाणां शतमिति पुस्तकस्य प्रथमखण्डस्य भूमिकामलिखत्। धर्मप्रवर्त्तकानधिकृत्य खण्डोऽयमरचि। संयोगात्प्रतीच्यजगति अस्याः कृतेरल्प एव प्रचारः प्रसारोऽभूत्। आङ्गलदेशेऽपि पुस्तकमिदं नाप्रथिष्ट; अल्पसंख्यका एव जना जानन्ति। पुस्तकस्य भूमिकायामदृश्यजगदुद्दिश्याचार्येण यदलेखि, तदस्ति पौनःपुन्येन पठनीयम्। तस्याभिमते केवलं ज्ञानेन्द्रियानुभूतजगत एव सत्ता नास्ति। ये केवलं ज्ञानेन्द्रियानुभूतजगदुद्दिश्यैव जीवन्ति, तेषां जीवनं तमसायते। कथितञ्च—

'आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥'

ज्ञानेन्द्रियानुभूतजगदतिरिच्य जगदस्ति, सीमितजगदतिरिच्य सीमाहीनं जगदस्ति, बुद्धिग्राह्यमतिरिच्य विद्यते निस्सन्देहमबुद्धिग्राह्यम्। सत्यं, बहवो मनुष्या एवंविधा आसन् येषामदृश्यसंसारेण सह कोऽपि सम्बन्धो नासीत्तथापि ते साहित्यसंगीतदर्शनप्रभृतिक्षेत्रेषु महत्कार्यं संपादयामासुः, परं मानवेतिहासे येषां नामानि सर्वोपरि विद्यन्ते, तेषां दृष्टिरासीदन्या। तेषां कृतीनामुद्भवस्थलं नासीदत्र इहलोके, मर्त्यलोके।

मानवजीवनस्य सौन्दर्यं तदा सहस्रगुणितं भवति यदा दृश्यजगतः सौन्दर्येण सह तस्यैकात्म्यं सम्पद्यते। यस्मिन् जगति वयं निवसामः तस्य महत्त्वमस्ति परमलघु, स्थानपरिवर्त्तनन्तु साम्प्रतं सम्भवं नास्ति, परमिह लौकिकजीवनस्य महत्त्ववृद्धिः सम्भवास्ति ज्ञानेन्द्रियाननुभूतसंसारेण सह सम्बन्धस्थापनतः। यदा चेतसि प्रेम्णो भावा दृंहन्ति, साधको विषयेभ्योऽक्षाननायासेन नियन्तुं शक्नोति। अव्युच्छिन्नेन चेतसा प्रेम एव साध्यं, प्रेम विषयविदूषिताशयं द्रागेव पुनाति। स्वस्त्ययनस्य तस्य परात्परस्याङ्घ्र्यभिध्यानधौतया धिया जीवनं यापितव्यम्।

## सप्तविंशतितमं प्रवचनम्

मुकुन्दाङ्घ्रिभक्तिविनिवेदितजीवितमवन्यामकुतोभयं प्रह्लादाख्यं निरागसं भक्तप्रवरं हिरण्यकशिपुसुतं भारते वर्षे को न जानीते भारतीयधर्मपरम्परापदमप्यधिगच्छञ्जनः ? दैत्यानां प्रातिकूल्येऽपि भगवद्भक्तावेवामुना बाल्यमतिवाहितमास्तिक्यबुद्धीनां कृते परमं सुखमावहता। विष्णोः समाराधनैकव्रतस्यास्य भारतीयग्रन्थेषु न केवलं संस्कृतवाङ्मयेषु, अपरसंस्कृताश्रितभारतीयवाचां साहित्येष्वपि प्रह्लादनं चरितं ग्रन्थकर्तृभिः स्वां स्वां शैलीमनुसरद्भिरवर्णि, प्राशंस्यस्मारि वा। भारतीयानां कृते प्रह्लादचरितस्याद्भुतं महत्त्वं दर्शं दर्शमाचार्यहक्करश्चरितस्यास्यानुशीलनार्थमस्य विभिन्नवर्णनानाञ्च तुलनात्मिकाधीत्यर्थं बहुवत्सरपूर्वं मनश्चक्रे। सङ्कल्पस्यास्य परिणतिर्बभूव खण्ड-

द्वयात्मके प्रह्लादाख्ये गवेषणापरकग्रन्थे, यस्तस्य बोनविश्वविद्यालयाध्यापनकाले प्रकाशतामाप ।

ग्रन्थस्यास्योपोद्घाते ग्रन्थकर्त्रा भारतीयधर्मविषयकपाश्चात्यविवरणप्रसङ्गं विषयीकृत्य षोडशशतकस्य मध्यभागे ख्रिस्तीयधर्मप्रचारकैः प्रकाशिते पुस्तके दशावतारचरितवर्णनकाले विष्णोर्भक्तप्रवरस्य प्रह्लादस्य कथोल्लेखोऽपि निरदेशि, कथोल्लेखस्यास्य स्वाभाविकतां दर्शयता । अपेतकृत्यस्यास्य कथां श्रावं श्रावमाधुनिकेऽपि भारतेऽनल्पसंख्यका जना अनाघ्रातशास्त्रगन्धा अपि सन्तः परमं मोदं लभन्ते, प्रेर्यन्ते च विघ्नानां घटाटोपेऽपि गन्तव्यैकदृष्टित्वाय । दुःखसङ्कुलिते लोकेऽस्मिन् कथेयं भगवद्भक्तान् सान्त्वयति, प्राणयति च तेषां भवदवदहनशिखाहृतानि चेतांसि । तर्हि खलु किमाश्चर्यं यदि प्रह्लादस्य नाम विभिन्नासु भारतीयभाषासु शतकृत्वः स्मर्यते । आचार्यहक्करो बङ्किमचन्द्रचट्टोपाध्यायस्य धर्म्मतत्त्वमाङ्गलभाषायां प्रकाशितं रामकृष्णोपदेशसङ्ग्रहञ्च निर्दिशति । रामकृष्णस्य सुप्रथितः शिष्यः स्वामी विवेकानन्दः स्वके भक्तियोगाख्ये ग्रन्थे प्रह्लादं नितरां प्राशंसत्तस्य जीवनसाधनायां भक्तेरादर्शस्वरूपं दर्शयन् । प्रह्लादं प्रणिहन्तुं हिरण्यकशिपुराभीक्ष्ण्येन चिचेष्टे, किन्तु भजनविगतसाध्वसोऽसौ सन्मार्गमेव सिषेवे, वत्सरास्तस्य भगवन्तं भजत एव ययुः । अस्माद्धेतोर्बहुषु आधुनिकभाषाग्रन्थेष्वपि प्रह्लादः जीवनादर्शरूपेण स्तूयते । श्रीमद्भगवद्गीताया नन्दननगरात्प्रकाशितायां टीकायामाधुनिकभारतस्य विश्रुतो विपश्चि-

त्प्रह्लादस्य भक्तेरद्भुतं महिमानमभ्युपगच्छति। प्रह्लादचरितस्य विस्मयावहां लोकप्रियतामिमां गवेषणाविषयीकृत्याचार्यहक्करो नानाविधसंस्कृतग्रन्थानालोडयाञ्चक्रे। अमुष्य मतानुसारं प्रह्लादचरितस्य श्रद्धास्पदं साम्प्रतिकं रूपं पुराणद्वये निभाल्यते विष्णुपुराणे, श्रीमद्भागवतपुराणे च। पुराणयोरेतयोर्भक्तिपंथमनुसरतां कृते यो महिमा स विदुषां विदितचर एव। असन्दिग्धप्राच्यत्वेभ्यो ग्रन्थेभ्य आरभ्य तदपेक्षया नूत्नग्रन्थान् यावच्चरितस्यास्य वर्णनेषु यद् वैभिन्न्यं वीक्ष्यते तन्नो केवलं प्रह्लादचरितानुशीलकेभ्य एवोपयुज्यते, भारतीयग्रन्थकाराणां चेतसो वृत्तीनां प्रस्फुटनक्रमोपपत्त्यर्थमपि तस्य निष्प्रयोजनत्वं कः खलु विपश्चित्प्रतिपादयिष्यति ?

संस्कृतवाङ्मयमहीरुहस्य बहुशाखत्वाद् बहुपत्रपुष्पत्वादेवंविधस्य कस्यचिदपि चरितनायकस्य चरितं सम्यगनुशीलयितुं जनः कथं प्रभवेत्? प्रह्लादचरिताधीत्यर्थमाचार्यहक्करेण बह्वायासपूर्वकं वेदमहाभारतपुराणपञ्चलक्षणादिग्रन्थानाश्रित्य प्रह्लादाख्यो ग्रन्थोऽयं व्यरचि, यत्र भारतीयधर्मेषु महामहिमानं बिभ्रतो भक्तस्यास्य कथायाः क्रमविकासः प्रस्तूयते। प्रह्लादकथा नृसिंहावतारेण किल सम्बध्यते। प्रह्लाद इति नाम्ना नृसिंहावतारकथा, नृसिंहावतारकथया प्रह्लादस्य कथा स्वत एव चेतसि समुद्भास्यते, परं प्रह्लादचरितस्य वैयक्तिकमपि महिमानं सुधियो नोपेक्षेरन्। न केवलं प्रह्लादवर्णनस्य पुरा-

कालिकीमवतारनिरपेक्षतां दृग्गोचरीकृत्य विष्णुपुराणान्तर्गत-समुपलब्धं प्रह्लादचरितमपरग्रन्थेषु समुपलब्धप्रह्लादचरितानि चापि निभाल्य जर्मनदेशीय आचार्योऽयं तेषां स्वतन्त्रगवेषणा-विषयत्वं मनसि निदधे। काले काले धर्मप्रतिपत्तिविषयको यो परीवर्त्तोऽभ्युपपद्यते स्म तं लक्षीकृत्यैव खलु प्रह्लादकथायाः क्रमविकासमवगन्तुमनुसन्धानकृदर्हतीति हेतुमुररीकृत्य ग्रन्थकर्त्रा विषयोऽयं नोपैक्ष्यत।

अथाभिधानद्वयं ग्रन्थेषु वीक्ष्यत, प्रह्लादः प्रह्रादश्च। प्रह्लाद इत्यभिधानरूपस्य पौष्कल्यं दरीदृश्यते। प्रह्राद इति संज्ञानस्य कादाचित्कताहेतोः प्रह्लाद इति संज्ञानमेव ग्रन्थकर्त्रा व्यवहृतमिति समुचितमेव। प्रह्लादः असुर इति ख्यात आसीत्। महाभारतकालात्तं प्रति दैत्यदानवादिशब्दानपि बहवः प्रयुयुजिरे। पदानामेतेषां रक्षोराक्षसयोश्च पर्यायत्वरूपेणैव प्रयोगो विगतशतकेषु विधीयते स्म। शब्दानामेषां सम्यगर्थ-वैभिन्न्यावधारणं शब्दशास्त्रिणां कृते गवेषणायाः स्वतन्त्रविषयो भवितुं शक्नोति। अथ प्राच्यतमेषु ग्रन्थेषु तैत्तिरीयब्राह्मणे प्रह्लादः कयाधुसुतो विरोचनस्य पितेति निगद्यते, कायाधव इति पदात्। पुराणपञ्चलक्षणस्य वंशवर्णनखण्डे तस्य कयाधु-संज्ञिकाऽम्बेयं नो निर्दिश्यते; तत्र स हिरण्यकशिपुसुतो, हिरण्याक्ष-भ्रातृव्योऽनुह्लाद-ह्लाद-संह्लादानां भ्राता, विरोचनस्य पिता बलेः पितामह इति वर्ण्यते। अग्निपुराणं, ब्रह्मपुराणं, गरुड-

पुराणं, हरिवंशपुराणं, कूर्मपुराणं, शिवपुराणं, विष्णुपुराणं, ब्रह्माण्डपुराणं, वायुपुराणं, मत्स्यपुराणं, पद्मपुराणञ्च सन्दर्भेऽस्मिन् द्रष्टव्यानि। हिरण्यकशिपुर्दितिकश्यपयोः पुत्रो ब्रह्मणो मानसपुत्रस्य मरीचेः पौत्रः। महाभारते प्रह्लादस्य पितृव्यो हिरण्याक्षस्तस्य भ्राता ह्लादश्च नो निर्दिश्येते। तयोः स्थाने शिबिबाष्कलौ तस्य भ्रातरावित्यवर्ण्यत। वैदिकसाहित्ये तु हिरण्यकशिपोरुल्लेखो नोपलभ्यते। प्रह्लादस्तु तत्रासुरेषु तद्वद् यद्वत्प्रजापतिर्देवेषु। पुराणेषु महाभारते च स दैत्येन्द्ररूपेण किल वर्ण्यते। एकस्मिन् स्थाने पितामहो ब्रह्मा लोकशास्तृ-चयनकामः सन् प्रह्लादं दैत्यदानवानां शासकपदे विनियोजयति। महाभारतेऽपि प्रह्लादोऽयमसुराणां, दानवानां दैत्यानां वा प्रमुख इति निरूपयाञ्चक्रे।

कथंविधञ्चारित्र्यमासीत् प्रह्लादस्यास्य? पुरातनतम-वाङ्मये त्वसावपरदैत्यसंनिभः। वेदेषु तस्य चारित्र्यमुद्दिश्य किमपि नो निर्दिदिशे। आचार्यहक्करेण युगेऽस्मिन् प्रह्लाद-चरितस्यापरदानवचरिततुल्यत्वमस्माद्धेतोरौहि। महाभारतेऽपि एकस्मिन् स्थलेऽसौ दैत्यानां समानधर्मेत्यवर्ण्यत। बहवो दानवेन्द्रा निर्दिश्यन्ते हिरण्यकशिपुश्च प्रह्लादस्य पितृव्यो हिरण्याक्षश्च। त आसन् धर्मद्रोहिणो नीतिविद्रावका अनीतिप्रियाः साधूत्पीडनदिदृक्षवः। ब्रह्मपुराणे, गरुडपुराणे, हरिवंशे, शिव-पुराणे च वीर्यवानिति विशेषणं प्रह्लादार्थं पुराणकाराः प्रयु-

युजिरे। अग्निपुराणे, ब्रह्माण्डपुराणे, हरिवंशपुराणे, शिवपुराणे विष्णुपुराणे च सोऽमितौजा इति शब्दितः। पाण्डुलिपिकारा यदा-तदा विशेषणान्येवंविधान्यपसार्य नवानि निवेशयामासुः। विष्णुपुराणस्य कतिचित्पाण्डुलिपिषु वीर्यवतः स्थाने बुद्धिमानिति विशेषणं सम्पादकेभ्योऽधिकं रुरुचे। पुराणस्यास्यान्यासु पाण्डुलिपिषु तत्रैव प्रह्लादो धर्मवानिति व्यपदिष्टोऽस्ति। अग्निपुराणेऽस्मिन् प्रसङ्गेऽसावतिवैष्णव इत्याख्यां लभते। गरुडपुराणं सन्दर्भेऽस्मिन् तं विष्णुतत्पर इति निरदिशत्। इत्थं दैत्येन्द्रोऽयं पुराकालिकः पुराणेष्वेतेषु लोकत्रयं स्वभक्त्या महित्वाऽन्येषां जीवनाध्वनीनानां हार्दं ध्वान्तं निवारयति। विशेषणानां परिष्कारोऽयं विकासक्रमो वा ?

देवासुरसङ्गरस्तु संस्कृतवाङ्मये नास्ति कृच्छ्रलभ्यः। देवेन्द्रे बद्धवैराया दैत्यवाहिन्या विजयं चिकीर्षता दैत्यानां प्रातिनिध्यं कुर्वता दैत्येन्द्रेण यदि सम्प्रहृतं तर्हि किमाश्चर्यम् ! आचार्यो हक्करः सन्दर्भेऽस्मिन् शाङ्खायनारण्यकं कौषीतक्युपनिषदञ्च प्रह्लादकथाध्येतृणां कृते निर्दिशति। प्रह्लादीयानामिन्द्रेण का गतिर्विहिता ! महाभारतीयाः कथा अप्यत्र ध्यानमर्हन्ति। तत्र प्रह्लादो वृत्तबलविरोचनशम्बरादिभिः साकमिन्द्रेण जघ्ने। अन्यस्मिन् स्थलेऽपि प्रह्लादाख्यो दैत्यराजो बलवृत्तनरकशम्बरैः सार्धमिन्द्रेण निपात्यते। इन्द्रप्रह्लादयोः सङ्गरस्य दारुणत्वाद् भयावहत्वाच्च स महाभारतेऽपरस्मिन् स्थलेऽपि

स्मर्यते । विष्णुपुराणादिषूपवर्णितादुत्तमश्लोकप्रह्लादस्यातिशयि-तेश्वरानुरागचरिताद् ध्वस्तमायागुणोदर्काद् युधि विक्रमोऽयं भिन्नरुचिर्हि वीक्ष्यते । प्रतीच्यविदुषां दृष्टौ तु महत्तमस्याभि-धानयोगमनुसरतो भक्तप्रवरस्य प्रह्लादस्य कथाया विकसन-क्रमस्य सोपानपरम्परेयम् ।

# अष्टाविंशतितमं प्रवचनम्

कोटिशः सनातनधर्मावलम्बिनां कृते स्वर्गापवर्गद्वारभूतायां महाभारतस्य भागभूतायां श्रीमद्भगवद्गीतायां स्निग्धप्रावृड्घनश्यामेन तत्त्ववित्तमेनाकुण्ठमेधसा श्रीकृष्णेनानन्यशरणस्य पार्थस्य नैदाधिकं हार्दं तापं शमयता महतां महिष्ठो यो विभूतियोगः कथयाञ्चक्रे तं पाठं पाठं कस्य कृष्णभक्तिपथमनुसरतश्चेतस्यनवद्यरसोद्रेको न जायते ! सर्वरसात्मना परमात्मना सर्वं खलु चराचरं व्याप्तं दिक्कालाद्यनवच्छिन्नेन। यशस्ये विभूतिवर्णनेऽस्मिन् विभूतिमतां श्रीमतां सत्त्वानां नामानि परमात्मन एव सर्वा श्रीरिति स्पष्टीकर्तुं पुण्यश्लोकेन योगिराजेन जगृहिरे—

यद्यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवमिति ॥

विभूतीनामेतासामन्तो नास्ति; गीतायामुद्देशत एव विभूतियोगोऽयं सङ्केतितः। विभूतिवर्णनेऽस्मिन् प्रह्लादोऽपि स्मर्यत इति प्रह्लादस्य महिमानं गीतायुगेऽपि द्योतयति। एवंविधे महत्तामुपगते ग्रन्थे ज्येष्ठानां गणनाप्रसङ्गे दैत्यकुमारोऽयं निर्दिदिश इत्यस्य प्रह्लादचरितानुशीलकानां कृते या गुर्वर्थता विद्यते साऽनुसन्धित्सुभिर्नोपेक्ष्या। महत्तामुपगतेषु ग्रन्थेषु श्रीमद्भगवद्गीताऽतिपुरातन्यस्तीत्यत्र नास्ति कोऽपि विस्मयावकाशः।

अथ बौद्धानां ग्रन्थेष्वपि प्रह्लादस्य चर्चा नो विहितेति चेन्न। अङ्गुत्तरनिकायेऽसावसुरेन्द्ररूपेण लक्ष्यते। आप्तबोधिना बुद्धेन सहामुष्य सङ्गमो भवति। परस्पराभिमुखं प्राप्तौ तौ संलपतः।

महाभारते स्थले-स्थले प्रह्लादमुद्दिश्य यानि विशेषणानि ग्रन्थकारः प्रयुयुजे तानि पुराणपञ्चलक्षणग्रन्थावलीषु नो लभ्यन्ते। प्राज्ञोऽयं, महाप्राज्ञोऽयं, बुद्धिमानयं, धर्मज्ञोऽयं, सर्वनिश्चयविच्च। तमुद्दिश्य सर्वज्ञ इति पदमपि ग्रन्थकारेण प्रायुज्यत। शान्तिपर्वणि मोक्षधर्मपर्वणि युधिष्ठिरेण प्रश्ने कृते भीष्मः प्रह्लादार्थं बुद्धिमान् प्राज्ञसत्तमश्चेति पदे व्यवहरति। कल्यचित्तमनामयं कञ्चिच्चरन्तं ब्राह्मणं बुद्धिमान् प्राज्ञसत्तमो राजा प्रह्लादः पप्रच्छेति। अस्माद्धेतोरयमचलितमतिर्दानवेन्द्रो बलिं क्षमामधिकृत्य शासितुमानर्ह। विगतभवकषायोऽयं विरोचनब्राह्मणयोर्विसंवादनिर्णेतृरूपेणापि महाभारतस्योद्योगपर्वणि

प्रजागरपर्वणि वीक्ष्यते। महाबुद्धिर्विदुरो धृतराष्ट्रं प्रति पुरातनमिममितिहासमुदाजहार। सुधन्वना कलहशान्त्यर्थं विरोचनस्य प्रतिद्वन्द्विनः पितुर्नाम प्रास्तावि पुत्रस्यापि हेतोः प्रह्लादो नानृतं वदेदिति विश्रम्भभाजा। दैत्यराजं तावेकमार्गावाशीविषाविवोपगतौ। तयोः प्रश्नं स निष्पक्षतया समादधाति। इत्थं तस्य न्यायप्रियत्वमुपपद्यते। दैत्यपतित्वेऽपि स शान्तिपर्वणि शक्रेण सह श्रेयस्साधनमधिकृत्य संवदति। प्रज्ञावत्सु विचक्षणो भीष्मः कथामिमां युधिष्ठिरार्थमुदाजहार। प्रह्लादोऽत्रासक्तो धूतपाप्मा संयमे रतो दान्तस्तुल्यनिन्दास्तुतिरस्तब्धोऽनहङ्कारश्च निगद्यते। प्रियाप्रियेषु समचित्तता, काञ्चने लोष्टे च समदृष्टिः, श्रेयसि निश्चितनिश्चयता, परावरज्ञता, सर्वज्ञता, चाप्युदीर्यन्ते। एवंभूतं नित्यं नारायणपरायणं भागवतं भक्तं परमात्मानं ध्यायन्तमेकान्त आसीनं तं तत्प्रज्ञां बुभुत्समान इव शक्रोऽभिगम्य जिज्ञासते। प्रह्लादस्य प्रशान्तिं दर्शं दर्शं शक्रः परमं विस्मयमाप। पाशबद्धोऽपि द्विषतां वशमागतः श्रिया विहीनोऽपि प्रह्लादो न शोचति, यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षतीति भगवद्गीतावचनं चरितार्थीकुर्वन्। शक्रस्तस्येत्थंभूताया अविचलितमतेर्हेतुं प्रति जिज्ञासमानः सम्यक् पप्रच्छ—'दैतेय प्रज्ञालाभादुताहो धृतिमत्तया आत्मनो व्यसनं पश्यन्नपि किल स्वस्थरूपोऽसि! सन्दर्भेऽस्मिन्न विस्मर्त्तव्यं यज्ज्ञानावाप्त्यर्थं दितिवंशता स्वयमेव नो विनिवारयति; रावणादपि राजनीतेः शिक्षा

गृहीतेति विदितचरमेव प्रेक्षावताम्। दत्तात्रेयस्य बहुगुरुत्वं को न जानीते भारतोयसंस्कृतिमभिजानञ्जनः ?

शुचिव्रतस्य विशोकस्य दैत्यराजस्य शिक्षणे किमपि वैयक्तिकं वैशिष्टयं नास्तीत्याचार्यहक्करस्यावेक्षणं खलु स्वाभाविकम्। सर्वेषां जटिलप्रश्नानामुत्तरं प्रह्लादाज्जिज्ञासुरधिगच्छति। शान्तिपर्वणि शक्रं प्रति तेन यः सांख्योपदेशः प्रददे तत्र किमद्भुतम् ? अनिष्टस्य निवृत्तिः प्रियस्य चानिवृत्तिर्लक्ष्यतेऽतः पुरुषार्थात् किम् ? सर्वे स्वभावप्रेरिता जगज्जाले भ्रमन्ति।

विकारान् नैव यो वेद न वेद प्रकृतिं पराम्।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे।
द्वेष्टारं च न पश्यामि यो ममाद्य ममायते ॥

श्लोकाविमौ श्रीमद्भगवद्गीतायाः सांख्योपदेशं स्मारयतो नाम।

निर्ममो निरहङ्कारो निरीहो मुक्तबन्धनः।
स्वस्थो व्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः।
नापायो विद्यते तस्य पश्यतो लोकविद्यया ॥

इत्थमेवारण्यपर्वणि, उद्योगपर्वणि, सभापर्वणि च यत्किञ्चित्सन्दर्भेऽस्मिन्नुपदेशरूपेण लभ्यते तत्सर्वं पुरातनं नाम। वैयक्तिकतायाश्चिह्नानि कुत्रापि न दृश्यन्ते। अत एव शासका-

नामेतेषां विश्लेषणं प्रह्लादकथाऽध्येतॄणां कृते आचार्यहक्करस्य दृष्टौ नादरमर्हति। परमिदमपि न विस्मर्त्तव्यं यन्महाभारतस्य कवीनां प्रह्लादव्यक्तित्वचित्रणस्य विकसनक्रमे गुर्वर्थं साहाय्यं विद्यते। तस्य दितीनां कुले समुद्भूतस्य व्यक्तित्वं ते प्रज्ञाशीलं चक्रिरे। प्रह्लादस्यात्रत्या भणितिरैतिहासिकबुद्धयाऽननुशीलनीया।

प्रह्लादस्य सर्वं व्यपगतमासीत्। तस्य नैष्किञ्चन्यस्य कथायामेव तस्य चारित्रिकसमुन्नतिकथाया बीजमन्वेष्टव्यमित्यौहिष्ट आचार्यहक्करः। युधि पराजयाद्दैन्यभावापत्तेश्च कथात एव तस्यापगतरागरूपस्य विद्वन्निषेवितरूपस्य कथा विकासमापेत्यसौ तर्कयाञ्चक्रे। मोक्षधर्मपर्वणीन्द्रस्तं श्रिया विहीन इति उदीरयामास। भीष्मस्तस्य निर्व्यसनतां मनोजेतृत्वञ्च निर्वर्णयन् तस्य हिरण्यकशिपोस्सुतस्य परावरज्ञतां निर्दिदेश। आचार्यहक्करस्य मतानुसारं कालं प्राप्य प्रह्लादो दैत्यकुमाररूपेऽप्युपदेष्टृरूपतामाप्तवान् परवर्त्तिनीषु कथासु।

महाभारते प्रह्लादस्य चारित्रिकचित्रणस्यापरवैशिष्ट्यं दैत्यराजस्यास्य सत्यप्रियतायां द्रष्टव्यम्। सत्यात्पथः न्याय्यात्पथः प्रह्लादो नात्मानमच्यावयत्। आदर्शोऽयं पुरातनभारतीयसंस्कृतावनुस्यूतोऽस्ति। कवेः सुप्रथितोऽयं श्लोकोऽत्र स्मृतिपथं समायाति—

अष्टाविंशतितमं प्रवचनम्

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु ,
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा ,
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।। इति

# एकोनत्रिंशत्तमं प्रवचनम्

विशदाशयस्य प्रह्लादस्य कथां श्रावं श्रावं सान्वयानां दिवौकसामाद्यं कूटस्थपुरुषं स्वमनोवाक्कर्मभिर्भजमानाः परमेश्वरपादश्रीविनिवेदितमनस्का भक्ता अद्यापि भारते वर्षे परमं प्रमोदमनुभवन्ति। अकुण्ठधिष्ण्यमनुव्रजद्भ्यः विविधशाखान्वितायाः कथाया अस्या ऐतिह्यानुकूलं विश्लेषणं न रोचतेतमामिति तु निश्चप्रचम्। किन्तु कथामिमामधिकृत्याधुनिकशैल्यनुसारिण्या अनुसन्धित्सायाः खल्वर्थवत्ताऽप्यभ्युपपद्यते नाम।

महाभारते प्रह्लादस्य धृतिमत्तां दृष्ट्वा शक्रस्य चेत आकृष्यते; तस्य व्यसनेऽपि स्वस्थरूपता शक्रमञ्जसा विस्मापयति। वैयक्तिकलाभहानिनिरपेक्षेयं सत्यप्रियतैव खलु भारतीयसंस्कृतेरादर्शरूपिणी बभूव। इमां धृतिमत्तां किलाङ्गीकृत्य भारतस्य

ह्रासयुगेऽपि कोटिशो हृदयानि शासितुं त्यक्तभोगलालसः कृश-कलेवरो गान्धी आनर्ह ।

शान्तिपर्वणो राजनीतेरुपदेशं प्रत्याचार्यहक्करो गवेषकाणामप्रमादं सयुक्तिकं समीहते । दैत्यानां शासकः प्रह्लादोऽत्र शीलादपि विशिष्यते, न केवलं ज्ञानादेव । शालीनताविरहितं ज्ञानं मरोरासारवन्नाम । विद्या ददाति विनयमिति नीतिवचनात् । प्रह्लादस्य महात्मनो ज्ञानमस्ति विशेषत इति । राजधर्मपर्वणि प्रह्लादविषयकः पुरातन इतिहास उदाहृतोऽस्ति । शीलमाश्रित्य त्रैलोक्यं तस्य वशमागतम् । वृहस्पतिर्देवानां गुरुः शक्राय नैःश्रेयसं ज्ञानं निजगाद । किं विशेषो भवेदिति पृष्टे सति वृहस्पतिना भार्गवस्य नाम निर्दिदिशे । तेन समनुज्ञातः शक्रः प्रह्लादमुपयाति । ब्राह्मणो भूत्वाऽनुत्तमां गुरुवृत्तिं स यथान्यायं कृतवान् । त्रैलोक्यराज्यसक्तस्य क्षणाभावाद् द्रागेव पाकशासनस्याभिलाषः पूर्तिं नागमत् । ततः प्रह्लादः शीलमुपादिशत् । 'काम्यानि वदतां संयच्छामि, वहामि च । धर्मात्मानमन्येषां कार्यपथे सक्तमनहंकृतं मां शास्त्रज्ञाः समासिञ्चन्ति । कथं ? क्षौद्रं मध्विव मक्षिकाः ।' ततः शक्रः प्रह्लादाच्छीलमाप्नोति । शीलविरहितं तं सर्वे तत्यजुः । यतश्शीलं ततो वयमित्युक्त्वा धर्मोऽपि तं प्रजहाति । धर्ममन्वितं सत्यमपि निश्चक्राम । श्रीरपि तस्य शरीरान्निर्ययौ । श्रियं गच्छन्तीं विलोक्य प्रह्लादस्य दैत्यपतेर्भयं प्रादुरासीदिति ।

यावन्त्यः प्रह्लादकथाः प्रचलिता आसन् तासूपवर्णिताः सर्वे प्रह्लादीया गुणाः शान्तिपर्वणः शक्रसंवादेऽस्मिन् सन्निहिताः सन्ति। तस्य व्यक्तित्वस्य पुरातना गुणा आसन् यौधेयवृत्ति-र्बलं, शौर्यं, राज्यश्रीः, पराक्रम इत्यादयः। राज्याच्च्यावितस्य तस्य गुणा बभूवुस्तपः, प्रज्ञाशीलता, सत्यनिष्ठा, न्यायप्रियता, धर्मतत्त्वज्ञता, शुचिव्रतत्वं, मनोनियमनमित्यादयः। इत्थमाचार्य-हक्करस्य मते कालं प्राप्य कथायामस्यां प्रह्लादस्य दैत्यभावः शिथिलायते, जगदीश्वरैकशरणतया गुणोऽत्र नो वीक्ष्यत इति स्पष्टं, परमुत्तरकालीनकथासु तस्य चारित्रिकसुमस्य यः परिमलः सुरभिं वितरति तस्य प्रभवोऽत्रान्वेष्टुं शक्यते। दैत्यानां स्वभाव-स्तिरोधीयते। महाभारतस्यैवापद्धर्मपर्वणि दैत्यानामधर्मनिश्चयत्वं, धर्मापनयः, पितामहशासनस्यातिक्रमश्चात्र मनसि निधातव्याः। क्रोधलोभसमन्वितान् दानवेन्द्रान् वर्णयता भीष्मेण न केवलं हिरण्यकशिपुर्हिरण्याक्षो, विरोचनः, शम्बरो, विप्रचितिर्नमुचिर्ब-लिश्च निर्दिदिशिरे; प्रह्लादोऽपि खलु धर्मसेतुमतिक्रम्य रेमे। क्व गतो दैत्यराजस्यास्य दैत्यत्वम्? उताहो श्लक्ष्णयाऽनघार्थया च वाचा धर्मनीतेरुपदेष्टा प्रह्लादः कश्चिदन्यो जनः? नाम-साम्यादेवैकव्यक्तित्वं खलु नोपपद्यते।

भक्तिबलेन जविष्ठां मनसः प्रकृतिं विजित्य मायाबलं पुरुषं यः प्रीणयामास स प्रह्लादाख्यो भक्ताग्रणीः नृसिंहावता-रेण च संयुज्यते। उभयोरेव स नास्ति एकलः। नृसिंहावतार-

कथायां तस्य पिता वीक्ष्यते, वामनावतारे तस्य पौत्रः। नृसिंहावतारकथातः प्रह्लादो विच्छेत्तुं न शक्यते। महाभारते, हरिवंशे, चतुर्षु पुराणेषु च नृसिंहावतारकथायाः सघटने वैभिन्न्यं विद्यते। वैभिन्न्यमिदमस्वाभाविकं नास्ति। पुराणद्वये शब्दानामपि साम्यं निभाल्याचार्यहक्करो वर्णनस्थलविस्तृतिहेतुं सम्पादकानामृजुकुटिलपथिजुषां रुचीनां वैचित्र्येऽनुपश्यति। संगराणां, चिन्तनानां, स्तुतीनां वा वर्णनं, विस्तृतं सक्षिप्तं वेत्थं संन्यवेशि। समुपलब्धपुराणानां संस्करणेषु या विभिन्नरूपिणी वर्णनविस्तृतिर्वीक्ष्यते तस्या उत्सस्तु एक एव। महाभारतस्य पञ्च श्लोका हरिवंशेऽष्टाशीत्यधिकद्विशतसंख्यकाः सञ्जाताः।

महाभारतस्यारण्यपर्वणि या कथा लभ्यते सा प्राचीनतमा न वेत्याचार्यहक्करः परीक्षितुं नोत्सेहे, किन्तु तत्र कथानामुत्सो द्रष्टव्य इत्यनुरुणद्धि। हिरण्यकशिपोर्वधस्य राजप्रासादध्वंसनस्य च वर्णनानि कालं प्राप्य भिन्नैः कविभिर्भिन्नान् रागानापुः।

हिरण्यकशिपोर्वधं नृसिंहरूपे भगवदवतारञ्चोद्दिश्य पुरातन इतिहासो विद्यते यत्र दानवेन्द्रस्यास्य पूर्वजन्मनस्तपस्तपसः परिणतिश्च वीक्ष्येते। हरिवंशे हरिवंशपर्वण एकचत्वारिंशत्तममध्यायमाचार्यहक्करः सन्दर्भेऽस्मिन्निर्दिशति। बलदर्पितः सुरारिः स एतत्कथानुसारं सुदुष्करं तपश्चचार। दशवर्षसहस्राणि शतानि दश पञ्च च। तस्य व्रतस्य दार्ढ्यं विलोक्य तस्य शमदमाभ्याञ्च चराचरगुरुर्ब्रह्मविदां श्रेष्ठो ब्रह्मा प्रीतो बभूव।

तस्मै वरं प्रायच्छत् । वरानुसारं न तु देवासुरगन्धर्वा न यक्षोरगराक्षसा न मानुषाः पिशाचा वा दैत्यममुं कथञ्चन हन्तुं समर्थाः स्युः । ऋषयः क्रोधवशादपि तं न शपेयुः । शस्त्रास्त्रादिभिर्गिरिभिः पादपैर्वा न तस्य वधः प्रकल्प्येत । तर्हि कथं महाबलोऽयं म्रियेत ? यः सभृत्यबलवाहनमेकेनैव पाणिप्रहारेण तं नाशयितुं शक्नोति तेनैव केवलं दैत्यराजस्य तस्य मृत्युः सम्भविता । वरमवाप्य हिरण्यकशिपुस्तपश्चर्यां त्यक्त्वा भुवनत्रयं पीडयामास । शंसितव्रतान् मुनीन् सदाचारपरान् मानवानपि । दैत्यान् यज्ञियांश्चकार देवांश्चायज्ञियान् । उत्पीडिता दिवौकस इन्द्रपुरोगमाः पद्मासनं विज्ञापयन्ति, तदनु स्निग्धस्मितावलोकनमुत्फुल्लाम्बुजपत्राक्षं देवदेवेशं नारायणम् ।

ब्रह्माण्डपुराणस्य कथायां वामनपुराणस्य च कथायां ब्रह्मपुराणस्य हरिवंशपुराणस्य च कथातः किञ्चिद् वैभिन्न्यं विद्यते । विष्णुधर्मोत्तरपुराणस्य नृसिंहावतारकथाऽपि सन्दर्भेऽस्मिन् द्रष्टव्या । ब्रह्माण्डपुराणे हरिवंशपुराणे च हिरण्यकशिपोर्यः पूर्ववृत्तान्तो निगदितः स विष्णुधर्मोत्तरपुराणवर्त्तिकथातः किञ्चिद् भिन्नः । कथायामस्यां नृसिंहरूपे भगवतोऽवतरणस्य पुष्कलं वर्णनं पुराणकारेण चक्रे । पद्मपुराणेऽपि नृसिंहवर्णनप्रसङ्गोऽध्येयः । रुक्मशैलाभामपूर्वां तनुमाश्रितः सः । सर्वं त्रिभुवनं, शाश्वता लोकधर्माश्च निखिलं जगद् विश्वे च देवा नरसिंहेऽस्मिन् ददृशिरे । सिंहनादं विमुच्य व्यादितास्यः स अन्तक इव दानवेन्द्रकायं विदारयामासेति ।

# त्रिंशत्तमं प्रवचनम्

प्रकृतिपुरुषविवेकपरायणे शङ्करभगवत्पादस्य चेतसि सनातनं विरजं ब्रह्मज्योतिः कथमवततार, अभीष्टदर्शनं सर्वलोकनमस्कृतं भगवन्तं विष्णुं समाराधयन् यतमानसो ब्रह्मवर्चस्वी यतीनां मूर्धन्यः शङ्कर आचार्यशङ्कर उदककाम्यया मृगमरीचिकामुपधावद्भ्यो लोकेभ्यो बहूनि भाष्याणि प्राणैषीदित्यस्मिन् विषये मया प्रतीच्यविद्वन्मतं विगतप्रवचने निरदेशि। माण्डूक्यकारिकाविषयकस्य भाष्यस्याद्यत्वमुद्दिश्य लब्धप्रथितमाचार्यहक्करस्योहनमपि श्रोतृभिरश्रावि। भगवतो भाष्यकारस्य ब्रह्मसूत्रभाष्यमतमद्वैतवेदान्तवीथिषु विचरतां संख्यावतां कृते पथिदर्शयितृरूपेण खलु दरीदृष्टं भवति। भारतीयानां मुमुक्षूणां कृते एतावान् महिमा भगवतो बादरायणस्य विद्यते यत्तं समुपेक्ष्य स्वमतप्रख्यापनार्थं परमतापनुत्तये चाल्प एवाचार्या उद-

सहिषत । ननु ब्रह्मसूत्रभाष्यमाचार्यस्य प्रौढा कृतिः प्रतिभाति । कतमा अद्वैतभावापत्तेरुषसि प्राज्ञसत्तमेनानेन व्यरचिषतेति प्रश्नः प्रतीच्यजगतो गवेषकस्य चेतसि स्वभावत एव समुदेति । कतमे ग्रन्थे योगपथस्य प्रभावो दृक्पथमायाति, कतमे स उच्चैः कृत्याद्वैतसिद्धान्तं जुघोषेति विवेचनं भाष्यकारस्य कृतीनां पौर्वापर्यविमर्शनार्थमुपयुज्यते ।

आचार्यहक्करः सन्दर्भेऽस्मिन्नेतां दृष्टिमवष्टभ्य यदचैषीत्तदादरमर्हति । पातञ्जलयोगसूत्रीयभाष्ये द्वितीयपादस्य परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन इति पञ्चदशं सूत्रं विशदीकुर्वता मुनीनां प्रवरेण योगशास्त्रं चिकित्साशास्त्रेण तोलयाञ्चक्रे । 'तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या । तस्याश्च सम्यग्दर्शनमभावहेतुः । यथा चिकित्साशास्त्रं चतुर्व्यूहम्—रोगो रोगहेतुरारोग्यं भैषज्यमिति । एवमिदमपि शास्त्रं चतुर्व्यूहमेव । तद्यथा—संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति । तत्र दुःखबहुलः संसारो हेय' इति । अथ हेयोपादेयपुरस्सरं मतमिदं शङ्करभगवत्पादोऽपि योगसूत्रभाष्यविवरणस्योपोद्घाते विवृणोति, योगशास्त्रस्य चिकीर्षिताभिधित्सया । जननमरणधर्मणे योगशास्त्रं महद् भेषजम् । विभाजनमिदं समुपेक्ष्य आचार्योऽयं माण्डूक्यकारिकाभाष्ये तामेव पद्धतिमन्वकार्षीत् । योगसूत्रभाष्यविवरणे दुःखोदधिलीनमानसानां बहुविधक्लेशसन्तान-

सन्तापितानां चिन्ताजालावनद्धानां कृते योगो महाभेषजमिति प्रत्यपादि, माण्डूक्यकारिकाभाष्ये लक्ष्यदिदर्शयिषु: 'स निरस्तद्वैततत्त्वं भवरोगापनुत्तयेऽञ्जसा निरदिक्षत्। उपदेशसाहस्र्यां पुनरपि भावोऽयं प्रकटितः। तत्त्वमसिप्रकरणे ज्ञानामृतमधूत्तमप्रदायकं सद्गुरुं प्रणम्योनविंशतितमे श्लोके भेषजप्रयोगप्रकरणमारभमाणो ग्रन्थकृत ज्ञानविरागयोर्महिमानं निज गाद—

प्रयुज्य तृष्णाज्वरनाशकारणं चिकित्सितं ज्ञानविरागभेषजम्।
न याति कामज्वरसन्निपातजां शरीरमालां शतयोगदुःखिताम्॥

इत्थं जनिमृतिपरम्पराशतयोगैः क्लेशितेभ्योऽद्वैतभावापत्तेर्भेषजं भाष्यकृत् पुनरप्यश्लाघिष्ट। ग्रन्थस्यास्य गद्यप्रबन्धे उपमेयं पुनः प्रयुज्यते। निमित्तपरिहारान्मोक्षोपपत्तिः स्यादिति निवेद्य गुरोः स्वस्वभावस्य नैमित्तिकत्वं संश्रुत्य शिष्यो वक्ति— 'किं निमित्तम्? किं वा तस्य निवर्तकम्? को वा मम स्वभावः? यस्मिन्निमित्ते निर्वर्तिते नैमित्तिकाभावः; रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रतिपद्येयेति।' आचार्यहक्करस्य दृष्टौ ग्रन्था इमे समसामयिका भवितुमर्हन्ति। ग्रन्थत्रयमिदं योगशास्त्रान्नातिदूरम्। योगशास्त्रे क्रमिकाभ्यासो निर्वर्ण्यते; अमुष्य चिकित्साशास्त्रसादृश्यं सहजमेव मनसि प्रतिबिम्बितं भवति। न क्लेशप्रतियोगादुपात्तसमाधिस्थितौ। किं योगिनां

चर्चा नात्र विधीयते। क्रमिकाभ्यासपथाद् विरतो भाष्यकारो योगस्य पन्थान विजहाति, कालं प्राप्य।

आचार्यशङ्करः प्रशान्तगम्भीरशैल्या आचार्य आसीदिति विसंवदितुं कः खलु सुध्युत्सहेत ? तस्य ग्रन्थेषु तस्य समर्यादत्वं धीरत्वञ्च दरीदृश्यते। माण्डूक्यकारिकाभाष्यस्योपोद्घाते समाप्तौ च या ईडापङ्क्तयो दृश्यन्ते ता ग्रन्थकृतस्तां कृतोपकारतां विशद-यन्ति यामद्वैततत्त्वाधिगमाद्धेयोपादेयशून्यात्सोऽन्वभूत्। आचार्य-स्याधिकसंख्यकेषु ग्रन्थेषु स्तवनश्लोकानामदर्शनादाचार्यहक्कर इत्थमौहिष्ट। अमुष्योहनानुसारं येषु ग्रन्थेषु स्तवनश्लोका वीक्ष्यन्ते तान् भाष्यकारोऽद्वैतवेदान्तवीथिविचरणस्यादौ रचयाम्ब-भूवेत्यनुमातुं शक्यते। यावत्स स्वगुरोः सविधे तस्थौ, यावद् वा तस्य वेदान्तज्ञानोपदेष्टा जिजीव किंस्वित्तावदेव परम्परेयं तेन निर्वाहिता, परवर्त्तिनि काले प्रवृत्तिमिमां स किल तत्याज। बृहदारण्यकोपनिषद्भाष्ये कठोपनिषद्भाष्ये च सम्प्रदायकर्तृभ्यो या गद्योपनिबद्धा संक्षिप्ता प्रणतिर्दृश्यते तामतिरिच्य। आचार्य-हक्करस्य परिकल्पनानुसारमित्थमद्वैततत्त्वदेशिकस्यास्याद्यकृतयः स्युः—माण्डूक्यभाष्यं, तैत्तिरीयभाष्यमुपदेशसाहस्र्याः पद्य-प्रबन्धस्य प्रथमोऽन्त्याश्च त्रयो भागाः। उपदेशसाहस्रीविषयकं प्रतीच्यजगतो गवेषकस्यास्य मतमपि सन्दर्भेऽस्मिन् नो विस्मर्त्त-व्यम्। ग्रन्थोऽयं शङ्करभगवत्पादस्य विभिन्नानां विभिन्नकालेषु विरचितानां स्वतन्त्रकृतीनां सङ्कलनात्मको मन्तव्यो न त्वविभक्त इत्यमुष्य मतिः।

ननु माण्डूक्यकारिकायां तृतीयाध्यायस्यैकत्रिंशत्तमे श्लोके द्वैतभावस्य मनोदृश्यत्वं प्रतिपाद्यते, यत्किञ्चित्सचराचरं विद्यते तस्य ।

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ।।

श्लोकमिमं व्याख्यास्यमान आचार्यशङ्करो विवेकदर्शनाभ्यासवैराग्याभ्यामिति पदं प्रयुयुजे । पातञ्जलयोगसूत्रस्य प्रथमपादस्य द्वादशं सूत्रं व्याख्यानेऽस्मिन्नुदाहृतम्—अभ्यासवैराग्याभ्यां तन्निरोध इति । ननु व्यासोऽपि स्वभाष्येऽभ्यासमिति पदं विशदीकुर्वन् विवेकदर्शनाभ्यास इति पदं व्याजहार। कैवल्यप्राग्भारामुभयतो वाहिनीं चित्तनदीं कल्याणवहां संसारप्राग्भारां पापवहां वदन् वैराग्येण विषयस्रोतः खिलीक्रियत इति स्पष्टयन् विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोध इति व्याचष्टे । आचार्यहक्करस्य मते शङ्कराचार्येण विहितः सूत्रसमाश्रयोऽयं विचारमर्हति । सामान्यतोऽद्वैततत्त्वदेशिकोऽयं ध्यानाभ्यासादीनुद्दिश्योत्साहविशेषं नो प्रकटयाञ्चकार । उपदेशसाहस्र्याः पद्यप्रबन्धस्य तत्त्वमसिप्रकरणमाचार्यहक्करोऽत्र निर्दिशति । प्रसंख्यानं युक्त्याऽनुचिन्तये, यावद् ब्रह्मात्मैक्यं नानुभूयते तावत्प्रसंख्यानं सम्यगनुष्ठीयमानं साहाय्यं विदधात्येव, वाक्यार्थश्रुतिमात्रतः कृतकृत्यता नोपलभ्यते, वाक्यार्थप्रत्ययिनो निर्दुःखत्वं नो दृश्यत इत्यादीनि

पूर्वपक्षकथनान्युपसंहृत्योपदेशसाहस्रीकारः सिद्धान्तमुपचक्रमे-श्रूयमाणो मोक्षो नित्यसिद्धतः क्रियासाध्यो नास्तीति । ब्रह्मसूत्र-भाष्ये चतुर्थाध्याये प्रथमं द्वितीयं च सूत्रं व्याख्यायमानेन भगवता भाष्यकारेण प्रसंख्यानं समर्थयाऽञ्चक्रे सूत्रानुबद्धत्वात् । किन्तु बृहदारण्यकोपनिषद्भाष्ये स्वतन्त्रविषयविवेचनप्रसङ्गे न केवलमसौ स्मृतिसन्तर्ति विरुणद्धि, योगस्य चित्तवृत्तिनिरोध-साधनानां मोक्षावाप्तिहेतुत्वमपि प्रत्याख्याति । प्रकृतविषये माण्डूक्यभाष्यमित्थं योगसाधनातोऽदूरं वीक्ष्यते । अपरग्रन्थेषु अयं किल प्रत्यादिष्टम् । इत्थमाचार्यहृक्करस्य दृष्टौ माण्डूक्य-भाष्यमद्वैतसिद्धान्तोपदेष्टुर्भाष्यकारस्याद्या कृतिरासीदित्यवगन्तुं शक्यते ।

# एकत्रिंशत्तमं प्रवचनम्

परेऽमले ब्रह्मणि निवेशितमनस्काः शब्दैस्तमनञ्जनं केन विधिना प्रकटयेयुः। यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेति श्रुतिवचनात्तस्याकामोपसृष्टस्यागोचरत्वात्। द्वन्द्वहृतात्मनां नानासरणिविप्रलब्धानामस्मद्विधानां तमसः पारं जिगमिषतां कृते तु नेति-नेतिवचनमेव चेतःसन्तोषकरम्। ब्रह्मणः स्वयंप्रभस्य सच्चिदानन्दरूपत्वमद्वयत्वञ्च बहुभिश्चक्षुष्मद्भिरर्वाणषाताम्। तत्सत्, तच्चित्, तदानन्दः। आद्यस्य शङ्कराचार्यस्यात्र विषये का मतिरासीदिति विषयमधिकृत्य मया पूर्वस्मिन् प्रवचने जर्मनदेशीयगवेषणोपवर्णिता।

ब्रह्मणो विज्ञानानन्दत्वं शाङ्करमते स्वरूपान्वाख्यानमिति ग्राह्यम्। तैत्तिरीयभाष्येऽप्यानन्दो ब्रह्मणि स्वाभाविको, न तु

नैमित्तिक इति भगवता भाष्यकारेण निरदेशि। किन्त्वत्र नो विस्मर्त्तव्योऽमुना सङ्केतित आनन्दानन्दिनोरविभागः। ब्रह्मसूत्रभाष्ये मोक्षस्वरूपवर्णनप्रसङ्गेऽसावभिनवचेतनाधिगममभिनवानन्दाधिगमं मुक्तात्मनः प्रत्याख्यासीष्ट, मोक्षे विज्ञानान्तरमानन्दान्तरं चाविभज्यत इतिपदैः। अततर्कच्च—न च समानाश्रयाणामेकस्यात्मभूतानां धर्माणामितरेतरविषयविषयित्वं सम्भवतीति। आनन्दस्य विषयविषयिणोरपृथक्त्वमत्र विषये भ्रान्त्युत्पादकं स्यात्।

आचार्यहक्करस्य दृष्टौ परात्परस्यानन्दरूपताविषयकोऽयमनुत्साहः शाङ्करकृतीनां पौर्वापर्यविमर्शनार्थं तस्य चिन्तनविकासक्रमाधिगमार्थञ्च मन्दादरं नार्हति। ब्रह्मसूत्रभाष्ये,छान्दोग्यभाष्ये च भाष्यकारेणानन्दतत्त्वस्य व्याख्याऽनुषङ्गिकतयैवाकारि। मुण्डकभाष्ये परस्य ब्रह्मण आनन्दरूपता नकारात्मकशैल्यां तावद् व्याख्यायि, आनन्दरूपं सर्वानर्थदुःखायासप्रहाणमिति शब्दैः। आनन्दरूपताविषयकोऽयं परीवर्त्त आचार्यहक्करस्य गवेषणानुसारं विषयविषयिविषयकस्य परीवर्त्तस्य समान्तरः। विषयविषयिविभागोऽयमवास्तवः, वस्तुतस्तु शुद्धा चितिरेव दिक्कालाद्यनवच्छिन्ना विराजते। आचार्यहक्करस्य मते विभागोऽयं वैनाशिकेभ्य आगत इति नासीदविदितस्तथापि भाष्यकारः कञ्चित्कालमिममङ्गीकृत्य कालं प्राप्य सन्दर्भेऽस्मिन् स्वं वैनाशिकेभ्यो दूरीकृतवान्। ब्रह्मसूत्रभाष्यस्य, चतुर्थेऽध्याये

उपस्थापितस्तर्को वै पठनीयः । 'विषयविषय्याभासत्वञ्च यन्मलं परिकल्प्यते विज्ञानस्य तदप्यन्यसंसर्गाभावादनुपपन्नम् । नह्य-विद्यमानेन विद्यमानस्य संसर्गः स्यात् । असति चान्यसंसर्गे यो धर्मो दृष्टः स तत्स्वभावत्वान्न तेन वियोगमर्हति तस्मादनित्य-संसर्गेण मलिनत्वं तद्विशुद्धिश्च विज्ञानस्येतीयं कल्पना अन्ध-परम्परैव प्रमाणशून्येत्यवगम्यत' इति ।

ब्रह्मसूत्रभाष्यस्योपोद्घातो, गीताभाष्यस्य त्रयोदशेऽध्याये षड्विंशतितमस्य श्लोकस्य भाष्यञ्च प्रकृतविषये द्रष्टव्ये । अत्र मीमांसासिद्धान्तो वीक्ष्यते यत्रात्माऽहंप्रत्ययात्मको बोबुध्यते । सर्वानर्थकरी अविद्याऽध्यासश्च चर्च्येते । माण्डूक्यभाष्यवत् तैत्ति-रीयभाष्यवच्चात्र विषयविषयिणोः सम्बन्धस्याविद्याविजृम्भि-तत्वमनिर्दिश्य विषयविषयिणोः परस्पराध्यासो निर्वर्ण्यते । विषयपरिकल्पनामुद्दिश्याध्येतृभिः सावधानतया भवितव्यम् । शङ्कराचार्यस्यापरग्रन्थैर्व्यावहारिकस्याहंप्रत्ययस्य विषयक्षेत्रोप-गतत्वं प्रतीयते । पद्मपादाचार्येण विषयेऽस्मिन् स्वशैल्यां चर्चितम् । शाङ्करव्याहृती नित्यात्मनो दृष्टिः, बाह्यनित्यदृष्टिश्चात्र मनसि निधातव्ये । ब्रह्मसूत्रभाष्यस्योपोद्घाते विषयविषयिणौ तमःप्रकाश-वद् विरुद्धस्वभावाविति निरदेशिषाताम् । माण्डूक्यभाष्यस्य तैत्ति-रीयभाष्यस्य च व्याख्यानानुसारं विषयविषयिणोरैक्ये तयोर्वि-भेदावसानज्ञाने वा सत्यमेषणीयम् । परन्त्वत्र तु परमार्थता विषयिणि लभ्या, नान्यत्र । यदा विषयस्य मिथ्यात्वे ज्ञानदृग्-

म्यस्य शाश्वतिकस्यात्मन ऐक्ये च गतसाध्वसानां बुद्धिर्विमलत्वमवाप्य पर्यवतिष्ठते, जीवप्रततिर्हक्पथाद् विलुप्यते, तदाऽनन्दस्य प्रश्नः कुत्र केन विधिनोत्पद्येत। आचार्यहक्करस्योहनानुसारं भाष्यकारः परात्परस्यानन्दरूपतां समुपैक्षिष्ट, यतो हि आनन्दस्य निर्देशो विषयभूमिमपि पुरस्करोति—मनसः क्रियाश्च। अतः केवलं दिक्कालाद्यनवच्छिन्ना चितिरेव तावदवशिष्यते परमतत्त्वानुसन्धित्सोर्हृष्टौ।

वेदान्तिवर्यौ मण्डनमिश्रो विमुक्तात्मा च, अपरेऽपि वेदान्तवीथिविहरणपरा ग्रन्थकाराः सन्दर्भेऽस्मिन् तद्दाढर्यं नादीदृशन् यच्छाङ्करकृतिषु वीक्ष्यते। तैत्तिरीयभाष्ये विहितं तर्कं प्रत्याचार्यहक्करोऽध्येतॄणां दत्तावधानतां समीहते। 'लौकिक आनन्दो बाह्याध्यात्मिकसाधनासम्पत्तिनिमित्त उत्कृष्टः, स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम्। अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते। लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्राविद्यया तिरस्क्रियमाणे विज्ञान उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद् यथाविज्ञानं विषयादिसाधनासम्बन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः सम्पद्यते। स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षं विभाव्यते शतगुणोत्तरोत्कर्षेण यावद् हिरण्यगर्भस्य ब्रह्मण आनन्द' इति।

**यथा यथाऽविद्या क्षीयते, मोहो वै प्रलीयते, तथा तथा**

आनन्दोऽप्युपचीयते । अविद्याहानतारतम्याश्रितोऽस्त्यानन्दानुभवः । परमानन्दो ब्रह्मानन्दो वा विषयहानादेवाधिगम्यते । ननु इत्थंभूते शाङ्करसिद्धान्ते पूर्वकालिकी षडूर्म्मित्यागपुरस्सरा योगसाधनैव किं हेतुभूता ? आचार्यहक्करस्य दृष्टौ योगाराधनप्रभावोऽत्रालघुः ।

यदि गौडपादस्य कारिकाया अध्ययनान्माण्डूक्यभाष्यप्रणयनाच्च शङ्कराचार्यस्याद्वैतवेदान्तित्वं समारभ्यते, तर्हि कालक्रमेणामुष्य विचारसरणिर्नूनं केषुचित् स्थलेष्वन्यभावमापद्यतेत्याचार्यहक्करो मन्यते । ननु भगवतो भाष्यकारस्यारम्भिककालिक्यः कृतयस्तु काः ? आचार्यहक्करस्य मते वेदान्तसाधनापूर्वतनं योगभाष्यविवरणं, माण्डूक्यभाष्यं, तैत्तिरीयभाष्यमुपदेशसाहस्याः पद्यप्रबन्धस्यांशः भाष्यकृत आद्यकृतय आसन्निति मन्तु शक्यते । अपरकालिककृतीरसौ गणयाम्बभूव—उपदेशसाहस्या गद्यप्रबन्धं, पद्यप्रबन्धस्य बहूनि प्रकरणानि बृहदारण्यकोपनिषद्भाष्यं, छान्दोग्योपनिषद्भाष्यं, ब्रह्मसूत्रभाष्यं, केनोपनिषत्पदभाष्यं, केनोपनिषद्वाक्यभाष्यं, कठोपनिषद्भाष्यं, मुण्डकोपनिषद्भाष्यं, प्रश्नोपनिषद्भाष्यमैतरेयोपनिषद्भाष्यमीशावास्योपनिषद्भाष्यं, श्रीमद्भगवद्गीताभाष्यमध्यात्मपटलविवरणञ्च । योगभाष्यविवरणं विहाय सर्वेषु एतेषु ग्रन्थेषु विशेषो वीक्ष्यते यस्तानपरवेदान्तिग्रन्थेभ्यः पृथक् कुरुते, अनुगामिनां ग्रन्थेभ्योऽपि । विषयममुमुद्दिश्याचार्यहक्करस्त्रिपञ्चाशद-

धिकनवशताधिकसहस्रतमे ख्रिस्ताब्दे प्रकाशिते विवर्त्त इत्याख्ये निबन्धे, पञ्चाशदधिकनवशताधिकसहस्रतमे ख्रिस्ताब्दे प्रकाशिते शाङ्करसिद्धान्तानां पदानाञ्च वैशिष्ट्यमित्याख्ये निबन्धे च स्वकं मतं प्राचीकटत्। अस्तु।

ब्रह्मण आनन्दरूपतैव प्रायशो मायोन्मन्थनभीरुभिर्भूतिसृतिं तित्यक्षुभिरुपचर्यते। असदनुसन्धिमुज्झित्वाऽनल्पसंख्यकापरमेष्ठिपादपद्मविनिवेदितमनस्का देशकालविषयातिवर्त्तिनीमिमामेव स्मारं स्मारं कालं स्म क्षपयन्ति।

# द्वात्रिंशत्तमं प्रवचनम्

वैदिकधर्मेषु श्रुतीनां स्थानं कायेषु प्राणवत् । श्रीमद्भगवद्गीतामाहात्म्यवर्णनप्रसङ्गे भगवतो वासुदेवस्य दोग्धृत्वं निर्दिशता मुनिना सर्वोपनिषदां धेनुत्वं प्रतिपेदे, 'सर्वोपनिषदो गावो, दोग्धा गोपालनन्दन' इति ब्रुवता । तत्रापि ईशकेनकठादिश्रुतीनां सर्वातिशायि लोकप्रियत्वं वीक्ष्यते । कठोपनिषच्छ्रवणमनननिदिध्यासनपरायणानां चेतांसि हृषीकाणि च विगर्हिते मृत्योः पथि न चुच्योतिषन्ति, कालरंहसाऽप्रभावितास्ते व्यामोहनिशायाः प्रगाढे तमसि निःशयानानामादर्शभूताः परात्परं पुरुषमुपयान्तीति श्रद्दधानाः सनातनधर्मावलम्बिनो जना विश्वसन्ति । भवतु, पुण्यश्लोकं प्रश्रयान्वितं नचिकेतसं यमो यदुवाच तदाऽऽस्तिक्यबुद्ध्याऽनुशीलनाच्चेतसि कूटस्थाय स्वरोचिषेऽनुरक्ति खलु

जागरयति, सम्वादोऽयमैहिकामुष्मिकतृषः शामयतीति बहुभिर्मन्यते ।

उपनिषदः प्रतीच्यजगतो वाक्षु अनूद्य प्रतीच्यविद्याव्यसनिनस्ता अनधीतसंस्कृतजनेष्वपि प्रख्यापयाञ्चक्रुः । उपनिषदां लब्धकीर्त्तेर्डयसनाख्यस्य शास्त्राध्येतुर्जर्मनानुवादो, बटलिङ्काख्यस्यानुसन्धातुरुपनिषदां सटिप्पणानुवादो बहुवत्सरपूर्वमेव जर्मन्यां प्रख्यातिमापतुः । कठोपनिषदो गेल्दनरकृतोऽनुवादष्टचूबीङ्गननगरादेकादशाधिकनवशताधिकसहस्रतमे ख्रिस्ताब्दे मुद्रितो बभूव। तदनु हिल्लब्राण्टाभिधो हेर्टैलाभिधश्च विद्वांसावुपनिषदोऽस्या आंशिकानुवादार्थमयतेताम्। प्राच्यशास्त्रीयग्रन्थावलेः पञ्चदशखण्डे मोक्षमूलराभिधस्य भारते वर्षे ख्यातचरस्य विदुषः कठोपनिषदोऽनुवादः प्रकाश्यतामापेति बहूनां श्रोतृणां कृते नूत्नः समाचारो नास्ति । न केवलं भाषान्तरीकृत्य प्रतीच्यविद्वांसो विरेमिरे, इमामुद्दिश्य विविधभावैरूहापोहमपि कृतवन्तः । अद्यतने प्रवचने आचार्याल्सदोर्फस्य कठोपनिषदः पाठभेदमुद्दिश्य प्रकटितं मतमधिकृत्य किञ्चित्कथयिष्यते ।

ननु उपनिषदियमादिकालेऽपि किमस्मिन्नेव रूपे प्रचलिताऽऽसीत् ? प्रश्नोऽयमादरमर्हति । विद्वद्भिः समाधानार्थं यत्नो विहितः, परं निश्चप्रचरीत्याऽद्यापि मौलिकं रूपमर्थो वाऽनिर्णीत एवास्याः । काठिन्यस्य हेतुः श्रुतेरस्या दीर्घकालिकं लोकप्रियत्वमेवान्वेष्टुं शक्यते । विषयममुमुद्दिश्याचार्याल्सदोर्फोऽ-

नुसन्धानस्य नूत्नां पद्धतिं किल जगृहे । छन्दोभङ्गदोषदर्शनस्य । प्रकृतग्रन्थे छन्दसां दोषो लिपिकारैरानीतो न त्वादिग्रन्थकृद्भिरिति मन्वान आचार्याल्सदोर्फो बहूनि स्थलानि निरदिक्षत् । स्थलेष्वेतेषु संशोधनमुपयुज्यते न वेति शास्त्रविदां विचारणामर्हति ।

त्रिष्टुभो जगत्याश्चान्त्यपदानि, वर्णानां नैयून्यमाधिक्यं वा प्रकृतग्रन्थस्य मौलिकं रूपं निर्धारयितुं विवेच्यानि । आचार्याल्सदोर्फः सन्दर्भेऽस्मिन्नपवादान्न प्रत्यादिशति । त्रिष्टुभोऽनियमिततां लक्ष्यीकृत्य ऋग्वेदभूमिकायामाचार्यौल्डनवेर्गः पूर्वमेव प्रतीच्ये जगति वेदाध्येतृणां ध्यानमाचकर्ष । आचार्याल्सदोर्फस्य मते संशोधनस्य सुदुष्करत्व एव खल्वेवम्भूता अपवादाः स्वीकृतिमर्हन्ति । कठोपनिषदि क्षेपकानां सम्भावनाऽमुष्य दृष्टौ बलीयसी विद्यते । लुप्तयोऽपि सन्ति, परं तासां तावती संख्या नास्ति ।

बटलिङ्कगेल्डनरौ निर्णयसागरमुद्रणालयश्च प्रथमाऽध्याये प्रथमवल्ल्यां सुविज्ञेयमणुरेष धर्म इति पाठं स्वीचक्रुः । सुज्ञेयमिति पाठ आनन्दाश्रमग्रन्थावल्यां स्वीकृतः । अयमेव शुद्धः स्यात् । बटलिङ्कगेल्डनरौ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्तीत्यत्र यदिति पदमोज्झेताम् । निर्णयसागरानन्दाश्रमयोः ग्रन्थयोर्यदिति पद विद्यते । आचार्याल्सदोर्फस्य मते त्रुटिरियं पाण्डुलिपीनामवलोकनमन्तराऽपि निराकर्त्तुं पार्यते । वेदान्तचणैः प्रथमाध्यायस्य द्वितीयवल्ल्याः श्लोकोऽयं बहुधो-

द्रियते—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥

नन्वत्र किं पदं स्यात् ? आत्मा वृणुते विवृणुते वा ? बटलिङ्केन वृणुत इति पाठः स्वीकृतः । हेर्टलो, हिलब्राण्टो, गेल्डनरश्चारपान्तिए, रनूश्च सर्वे विवृणुत इति पाठान्तरं स्वीचक्रुः । डयसन उभावन्ववादीत् । छन्दोदृष्ट्या तु वृणुत इति पाठः शुद्धः प्रतीयते ।

आशाप्रतीक्षे सङ्गतं सूनृतञ्चेत्यत्र सङ्गतमिति पदं संशयास्पदमित्याचार्यल्सिदोर्फः । विटनाख्योऽनुवादकोऽपि स्वाङ्गलानुवादे सङ्गतमिति पदस्याग्रे प्रश्नसूचकं चिह्नमदात् । ननु नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रतित्रीन् वरान्वृणीष्वेत्यत्र छन्दोभङ्गदोषः कथं निराक्रियेत ? आंगलीयभाषानुवादकौ विटनी चारपान्तिए च संशोधनार्थं स्वां स्वां मतिमनुसृत्यायतेताम् । विटन्याख्यस्यानुवादकस्य प्रस्ताव आल्सदोर्फस्य मते नादरमर्हति । चारपान्तिए इत्याख्यस्यानुवादकस्य मतानुसारमत्र उ इति शब्दः संयोज्यः । तस्मात्प्रतित्रीनु वरान्वृणीष्वेति । अन्यत्रापि उ इति शब्दः प्रयुज्यते । तदु मे निबोधेति प्रथमेऽध्याये प्रथमवल्ल्याम् । हीयतेऽर्थाद्य उ प्रेयो वृणीत इति द्वितीयवल्ल्याम् । तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन इति द्वितीयेऽध्याये चतुर्थवल्ल्याम् । आचार्यल्स-

दोर्फः संशोधनमिदं समर्थयाञ्चक्रे । प्रथमवल्ल्यामष्टादशश्लोके त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतमित्यत्राल्सदोर्फस्य मते त्रिणाचिकेतस्थाने नचिकेत इति स्यात् । पूर्ववर्त्तिनि श्लोके त्रिणाचिकेतस्त्रिभिरेत्य सन्धिमिति प्रयोगाल्लिपिकारस्य दोषोऽयमित्यमुनाऽनुमीयते ।

प्रथमवल्ल्याञ्चतुर्विंशतितमे श्लोके एतत्तुल्यं यदि मन्यसे वरमित्यत्र केर्नाख्यविदुषो मते यदि वा मन्यसे वरमिति पाठो भवितुमर्हति । आल्सदोर्फोऽपि संशोधनमिदं नो प्रत्याख्याति, शब्दस्यास्य विलोपस्य हेतुमपश्यन्नपि । पञ्चविंशतितमं श्लोकं विटनी छन्दोदृष्ट्याऽयौक्तिकं मन्वानः सरथा इति पदप्रयोगस्य मौलिकत्वमशंकिष्ट । आल्सदोर्फोऽत्र पादस्यारम्भे येति पदं संयोज्य वर्णाभावं निराकर्त्तुमयतिष्ट, सन्तुष्टिमलभमानोऽपि । चारपान्तिएः इष्टाविमा रामाः सरथाः सतूर्या इत्यत्र सरथा इति पदमस्थाने नास्ति । तस्मिन्नेव सन्दर्भे आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीरिति पंक्तिर्विद्यते । विटनी चारपेन्तियरश्चोभौ मदिति पदं छन्दोदृष्ट्याऽनुचितमज्ञासिष्टाम् । आल्सदोर्फः पदमिदं त्यक्तुमुदसहिष्ट, अस्याभावेऽप्यर्थविद्योतनाभावाभावात् । एकोनत्रिंशत्तमे श्लोके यदिति पदप्रयोगस्य मौलिकत्वं शङ्कमानोऽसौ तं प्रक्षिप्तमित्यौहिष्ट । एवमेव द्वितीयवल्ल्यां श्रवणायापि बहुभिर्यो न लभ्य इत्यत्र अपीति

शब्दस्य प्रयोगश्छन्दःशास्त्राध्येत्रे नारोचिष्ट । प्रक्षेपकस्य भ्रान्तिरियम् । अमुष्य मते शुद्धो मौलिकः पाठः स्यात्—

श्रवणाय बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥

# त्रयस्त्रिंशत्तमं प्रवचनम्

भवकश्मलं चिक्षालयिषतां मुमुक्षूणां कृते तु ग्रन्थयितुः प्रयोजनमेवालम्भवति, पदानां छन्दसां वा प्रयोगसाधुत्वमसाधुत्वं किल समुपेक्ष्यते । तेषां श्रवणमनननिदिध्यासनैः शास्त्रवचनं मनसा जरीगृह्यमाणानां चिकीर्षितन्तु एकमेव । त्रिविध दुःखविमोक्षणम् । द्वन्द्वक्षमास्ते प्रयोगानामसाधुत्वमपि सोढुं क्षमन्ते, परन्तु साहित्यरसमन्वेष्टुकामानामैतिह्यविदां वा दृष्टिः कार्यसरणिश्च भिन्ने स्तः । भारो न बाधते राजन् यथा बाधति बाधत इति महाकवेर्भणितिं को न जानाति । न केवलं कठोपनिषदो विवक्षितन्तस्याः शुद्धमौद्गमरूपमप्युद्दिश्य प्रतीच्ये जगति स्वं स्व सामर्थ्यमनुसृत्यानुसन्धित्सुभिरयत्यत ।

द्वितीयाध्यायस्य षष्ठवल्ल्यां यदिदं किञ्च जगत् सर्वं प्राण

एजति निःसृतमिति पाठो वीक्ष्यते। सुप्रथितो गवेषकश्चार-पेन्तिए: किमिति पदं विलोपयाञ्चक्रे। आचार्याल्सदोर्फो विलोपनमिदं समर्थयामास, छन्दस औचित्यात्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीत्यत्रापि छन्दःप्रवाहशैथिल्यमनपोहितम्। तं निराकर्त्तुमसौ यदिति पदं योजयितुं मनश्चक्रे। महद्भयं वज्रमुद्यतं यद् य एतद् विदुरमृतास्ते भवन्तीति। पदयोजनमिदमनुमितिः केवलाऽनिश्चयात्मिका।

सप्तदशः श्लोकोऽपि छन्दःशास्त्रविदां ध्यानमर्हति। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्ट इति। छन्दोदृष्ट्या पादोऽयं विचारार्हः। केर्नाभिधो गवेषको हृदि संनिविष्ट इति पाठान्तरं प्रस्तौति। चारपान्तिए इत्याख्येन विदुषा संनिविष्ट इति पदस्य स्थाने निविष्ट इति पदमनुमीयते। आचार्याल्सदोर्फोऽप्यनुमितिमिमां महत्त्वदृष्ट्या नह्यशङ्किष्ट। श्वेताश्वतरोपनिषद्यपि स्थलद्वये श्लोकोऽयं लभ्यत इति विद्वांसो न विस्मरेयुः।

छन्दोदृष्ट्या षष्ठवल्ल्याः पञ्चमश्लोकस्य शुद्धत्वं कथमवसीयेत? इदमेव तस्य मूलरूपमासीदिति बलादभ्युपगमनीयं किम्? आल्सदोर्फस्य मते चारपांतिए इत्याख्यस्य विदुषो मते च छन्दोदृष्ट्या श्लोकेऽस्मिन् प्रयत्नो विफलतां याति, प्राक्कालिकत्रिष्टुभो रूपन्त्वस्मिन् द्रष्टुं पार्यते।

यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके।
यथा अप्सु परीव ददृशे तथा गन्धर्वलोके -
छायातपयोरिव ब्रह्मलोके ।।

गार्बे इत्याख्यो गवेषकस्तथात्मनि, तथा गन्धर्वलोक इति पदाभ्यामनु गतिविरामं प्रस्तवीति। अपरञ्च - गार्बेबटलिङ्क-योर्दृष्टौ सप्तदशश्लोकान्तर्वर्त्तिनो मुञ्जाद् इवेषिकां धैर्य्येणेति शब्दा मौलिका नो सन्ति।

एतावतः प्राचीनस्य ग्रन्थस्य प्राथमिकं रूपमन्वेष्टुं शब्दार्थयोर्व्यतिषङ्गः, प्रथितप्रयोक्तृभिर्व्यवहृतानि छन्दांसि चानु-सन्धित्सवे क्षेमङ्कराणि, तथापि साध्यस्य दुष्करत्वं कः खलु मनीषी विस्मरिष्यति !



# चतुस्त्रिंशत्तमं प्रवचनम्

कठोपनिषद् भारतीयवाङ्मयस्यानिन्द्यसुन्दररत्नेषु गणयितव्या। तां विरहय्यान्वीक्षिकीमनुशीलयितुं यत्नं खलु विद्वद्देशीया एव विदधति। सर्वदुःखोपशमं गमयित्री सा मर्त्यपथि गन्तॄनां किल पाथेयभूता। तस्यां छन्दसो वैचित्र्यं दृष्ट्वाऽपरहेतुभ्यश्चानुसन्धित्सुभिस्तस्याः प्राथमिकरूपमुद्घाटयितुं विहिताः प्रयासा उपेक्षां नार्हन्ति।

ननु कठश्रुतेरुपोद्घात एव श्रद्धेति पद प्रयुज्यते। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश सोऽमन्यतेति। श्रद्धेति पदस्यात्र कोऽर्थः। प्रतीच्ये जगति प्रतीच्यभाषानुवादकैर्विश्वास इत्यर्थो बहुधाऽकारि। अस्मिन्नर्थे शब्दोऽयं भारतीयैरपि बहुधा गृह्यते। चार्पान्तिए इत्याख्योऽनुसन्धाताऽर्थममुं

प्रत्यादिदेश । आचार्याल्सदोर्फस्य मतेऽमुना प्रतिपन्नोऽर्थो युक्तियुक्ततामेति, अपरदृष्ट्याऽपरिपक्वेऽपि सति । गटिङ्गनविश्वविद्यालये शतकस्यास्य मध्यभागे वैदिकसाहित्ये पुरातनबौद्धसाहित्ये च श्रद्धेति नाम प्रबन्धः परीक्षार्थिना केनचित् प्रणीत आसीत् । प्रबन्धेऽस्मिन् श्रद्धेति पदं प्रबन्धकार आलोचयाश्चक्रे । आचार्याल्सदोर्फो विवेचनमिदमश्लाघिष्ट । तन्मते दाने समुत्साह इति पदस्यास्य तदानीन्तनोऽर्थो भवितुमर्हति । कठश्रुतौ, वेदेष्वन्यत्रापि अर्थेऽस्मिन् पदमिदमृषिभिर्व्यवह्रियते स्म । भारतवर्षस्य इदानीन्तनवाक्षु अर्थोऽयं यत्र तत्र स्फुटीभवति । अपरस्मिन्नर्थेऽपि प्रयुञ्जाना ग्रन्था नो दृश्यन्त इति चेन्न । श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रिय इत्यत्र श्रद्धेति पदं किं द्योतयति ? अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यतीत्यत्र श्रद्धायाः कोऽर्थः ? दाने समुत्साह इत्यर्थस्यासार्वत्रिकत्वं न विस्मर्त्तव्यम् ।

ननु प्रथमेऽध्याये प्रथमवल्ल्यां बहूनामेमि प्रथमो बहूनामेमि मध्यमः, किंस्विद्यमस्य कर्त्तव्यं यन्मयाद्य करिष्यतीति नचिकेतसो व्याहारे जीगाभिधः संस्कृतज्ञो विरोधाभासमद्राक्षीत् । चारपान्तिए आल्सदोर्फश्च विरोधाभासदर्शनमिदं प्रत्यादिशतः । प्रश्नसूचकपदाभावादत्र जीगाख्यस्य गवेषकस्यापत्तिस्तु शाम्यते । अयमेव भावः षष्ठश्लोकेऽपि द्रष्टव्यः ।

अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥

श्लोकेनानेन विरोधोक्तिविषयिका शङ्का परिह्रियतेतमाम्। द्वादशश्लोकस्थः शब्दप्रयोगोऽपि विचारमर्हति। स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेतीति। अनुवादकाः पादममुं सामान्यत इत्थमवगच्छन्ति—स्वर्गलोके किञ्चन भयं न विद्यते। हे मृत्यो, त्वं तत्र नासि, कोऽपि तत्र जराया न बिभेति। आचार्याल्सदोर्फस्य मते ग्रन्थकारस्याभीप्सितमन्यदेवासीत्। तत्र जना न तु त्वन्न जराया बिभ्यतीति कवेरभीप्सितोऽर्थः। हेर्टलाभिधो गवेषकस्तु पदपरिवर्त्तनं विनैव इत्थमन्ववादीत्। त्वं न इति पदयोः स्थाने त्वन्न इति पाठात् प्रचलितानुवादो निरस्यते। बटलिङ्काभिधोऽनुसन्धाता सन्दर्भेऽस्मिन् जराया इति पञ्चमीं विभक्तिं प्रस्तवीति। एवं समधीतव्याकरणानामपि चेतांसि तृप्तिमधिगमिष्यन्ति।

# पञ्चत्रिंशत्तमं प्रवचनम्

•

प्रत्नेषु समुपलब्धलघुकथाग्रन्थेषु पञ्चतन्त्राख्यायाः कृतेः स्थानं किल चकास्ति । न केवलं पौर्वसाहित्ये, विश्ववाङ्मयेऽपि कृतिरियमनितरसाधारणेति निगद्यते; साहित्येतिहासं समीचीनरीत्या परिज्ञातुन्तु आख्यायिकासङ्कलनमिदं कः खलु गवेषकोऽवमन्येत ! दुर्जनमकरसङ्कुलं भवाब्धिं सुखेन तितीर्षद्भिः प्रेयसे प्रयतमानैरर्थकामावभिकाङ्क्षमाणैर्बहुभिर्जनैरिदं विगतशतकेषु प्राशंसि । गीर्वाणगिरा बहुविधबुद्धिमतामनुभवान् ग्रथित्वा ग्रन्थकार ऐहिकाभ्युदयं चिकीर्षतां महोपकारं विदधे, कथोपनिबद्धोपदेशानामहार्यत्वादनर्घत्वाच्चेत्यत्र विप्रतिपत्तेरनवकाशः । भारते वर्षे तु दीर्घंकालं यावद् विचक्षणैः पण्डितैः कथाभिराभिः संस्कृतमधिजिगमिषूणामुत्साहो वर्धितो, मनांसि किल रञ्जि-

तानि । सत्यपि बुद्धस्वामिनः क्षेमेन्द्रपूर्णभद्रसोमदेवादीनामनितरसाधारणेऽलोकसामान्यगुणोपेते कथानिवहे पञ्चतन्त्रं खलु संस्कृतच्छात्राः पठन्तितमाम् । प्रतीच्यविद्वांसोऽपि वैदेशिकेष्वपि लब्धप्रचारं संस्कृतच्छात्राणां प्रेमास्पदीभूतं सुखबोध्यं ग्रन्थममुमधिकृत्य यावच्छक्यमनुसन्धाय स्वाभिमतं पुरस्कृतवन्तः । ग्रन्थस्यास्य पदप्रयोगमधिकृत्य साम्प्रतं विमर्शयिष्यते, सुरगवीसमुपासकानां सम्मोदार्थम् ।

मित्रभेदाख्ये प्रथमतन्त्रे पिङ्गलकस्य करटकदमनकनामानौ द्वौ श्टगालौ मन्त्रिपुत्रौ ग्रन्थकारेण निरदेशिषाताम्। ननु दमनक इति नाम्नोऽर्थः स्फुटः, किन्तु करटक इति नामकरणार्थं तीक्ष्णधीर्ग्रन्थप्रणेता कथमुदसहिष्टेति पृच्छा समुदेति । नाम्नोऽस्य चेतःसन्तोषकरीं व्याख्यामनुपलभ्य आचार्याल्सदोर्फः स्वमतं पुरस्करोति । हेर्टलाख्योऽनुसन्धाता स्वके हितोपदेशानुवादे करटस्य काक इत्यनुवादं कृत्वा स्वमतमित्थं पुष्णाति—भारतीयकथासु काकस्य कैतवं सुविदितं, धूर्त्तता च, यथा प्रतीच्यकथासु गोमायोः । अतो नाम्न आनर्थक्यशङ्का निरस्यत इति । हेर्टलाख्यस्य गवेषकस्य तर्कस्तु—आचार्याल्सदोर्फस्य दृष्टौ विशिष्टमादरं नार्हति । काक इत्यभिधानं कथापात्रस्य दौरात्म्यं दुर्वृत्ततान्तु तावत् सूचयति, परं पञ्चतन्त्रप्रणेताऽर्थेऽस्मिन् सिंहस्य मन्त्रिणं जिगर्हयिषितुं पदमिदं प्रयुयुज इति सम्भावना द्रढीयसी नास्ति । हेर्टलस्य व्याख्यामश्रद्दधान ए[illegible]: संस्कृतज्ञः

सन्दर्भेऽस्मिन्ननभिज्ञताऽर्हति निराबाधाममंस्त। पञ्चतन्त्रस्य पात्राणां नाम्नः प्रायशोऽर्थवत्ता वीक्ष्यते, अस्माद्धेतोः करटक इति नाम्नोऽपवादवत्ता खलु ग्राह्येति तस्याभिमतमाल्सदोर्फः प्रत्यादिदेश। तस्य दृष्टौ करटक इत्यभिधानं नियमापवाद इति वक्तुं न शक्यते, कथापात्रस्यास्य कथासु गुरुप्रभावात्।

'रट्' इति भ्वादिगणीयो धातुः स्पष्टार्थः। अतो यो बहुधा रटति अराटीद् वा स करटकः। शृगालार्थं संज्ञेयमर्थवती यतो मित्रभेद एव तदर्थं दीर्घरव इति संज्ञां ग्रन्थकर्ता प्रयुयुजे। सन्दर्भेऽस्मिन्नाचार्याल्सदोर्फो भट्टिकाव्यं समाश्रयति यत्र रटो लुङ्लकारं कविरशिशिक्षत्। घोराश्चारटिषुः शिवा इति शिवारुतेभ्य इत्थं रटः प्रयोगः काव्यविचक्षणैरपि विहितः। काकरुतमपि रटितमेवास्तीत्यस्माद्धेतोस्तदर्थकौ करटः करटको वेति शब्दौ प्रयुज्येते।

शृगालाविमौ करटकदमनकनामानौ ग्रन्थस्य कथासु अलघ्वीं भूमिकां निर्वाहयत इति विदितमेव कथारसिकानाम्।

## षट्त्रिंशत्तमं प्रवचनम्

पञ्चतन्त्रे कथारम्भ एव मन्त्रिपुत्राविति पदं वीक्ष्यते। तस्य च करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रावास्तामिति। ननु पदमिदं किं सूचयति? प्रतीच्ये जगति पदमिदमुद्दिश्य विद्वद्भिर्यद् विवेचितं तच्छ्रोतॄणां कृते प्रमोदावहो भविष्यतीति मत्वाऽद्य सन्दर्भेऽस्मिन् किञ्चिन्निवेदयिष्यते।

एज्जर्टनः स्वक आङ्ग्लभाषानुवादे द्वौ कुलक्रमागतौ मन्त्रिणाविति अन्ववादीत्। चतुरशीत्यधिकाष्टशताधिकसहस्रतमे ख्रिस्तीयाब्दे लाइप्सिगनगरतः प्रसारिते पञ्चतन्त्रानुवादे फ्रित्साख्यो जर्मनदेशीयः संस्कृतज्ञ एतदर्थं मन्त्रिणः पुत्रावुभावित्यनुवादमकार्षीत्। मन्त्रिपदस्य पारम्परिकतामपि निरादक्षत्। सुवि-

ख्यातः पञ्चतन्त्रानुशीलको हेर्टेलस्तन्त्राख्यायिकायां तौ दिवंगत-मन्त्रिणः सुतावास्तामिति विवृणोति ।

दमनकमुद्दिश्य सिंह एकस्मिन् स्थले कथयति—अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकः समागतः । ननु चिरन्तनो मन्त्रिपुत्र इति पदे कथं प्रतिच्यभाषासु स्पष्टीक्रियेताम् ? एज्जर्टनः स्वक आङ्ग्लानुवादे परम्परागतो दीर्घकालिको मन्त्रीत्यर्थमकार्षीत् । तन्त्राख्यायिकायां हेर्टलो दीर्घकालिको मन्त्रिसुत इत्यन्ववादीत् । चिरन्तनो मन्त्रिपुत्र इति पदे कथाप्रसङ्गे पुनरपि वीक्ष्येते । एज्जर्टनस्यानुवादः पूर्ववदेवास्ति, हेर्टलश्चिरकालात्सेवमानो मन्त्रिकुलस्य सुत इति व्याचख्ये । आचार्याल्सदोर्फस्य दृष्टावनुवादपद्धतिरियं सन्तोषपदवीं नावहति । व्याकरणादेव सर्वत्रार्थप्रतिपत्तिर्भूयादिति चेन्न । तस्य मते पुत्र इति पदमत्र तनयार्थको नास्ति; इदं वर्गविशेषत्वमेव केवलं व्यनक्ति, अन्यत्रवत् । अतश्चिरन्तनो मन्त्रिपुत्रस्तु तावच्चिरकालिको मन्त्रीति बोद्धव्यः

पञ्चतन्त्रे मन्त्रिणो बहुधा वंशपरम्परागता भवन्ति । एकस्मिन् स्थले दमनको वक्ति—देवपादानां वयमन्वयागता भृत्या इति । सोमदेवः क्रमागता इति पदं प्रयुङ्क्ते । अतएव एज्जर्टनस्य हेर्टलस्य चानुवादमाचार्याल्सदोर्फः अज्ञानविजृम्भितममंसीति चेन्न । तृतीयतन्त्रे काकराजस्यान्वयपरम्परागताः पञ्च सचिवा निर्दिश्यन्ते । उड्डीवी, संडीव्याडवी, प्रडीवी, चिरञ्जीवी

चेति । कथाप्रसङ्गे वायसराजो मेघवर्णश्चिरञ्जीविनं प्रत्यन्वयागतः सचिव इति शब्दौ व्यवाहार्षीत्। तात, त्वमस्माकं चिरन्तनोऽन्वयागतः सचिवोऽजस्रं च हितान्वेषीति । अन्ते उलूकराजः पितृपैतामहैः स्वमन्त्रिभिः सह परामृशति ।

भवतु तावत्। आचार्याल्सदोर्फस्य मते मन्त्रिपुत्र इति पदस्यार्थोऽस्ति केवलं मन्त्री; न तु मन्त्रिणस्तनयः । संस्कृतस्य प्रतीच्यमहाकोशे पुत्र इति शब्दस्यैवम्भूतोऽर्थस्तु नो लभ्यत इति सत्यं, परन्तत्रैव देवपुत्रस्य देवो, वणिक्पुत्रस्य वणिगिति अर्थो वीक्ष्यते । राजपुत्र इति पदं सन्दर्भेऽस्मिन् विपश्चितो नो विस्मरेयुः । कश्चिद् राजपुत्रोऽत्र समायात इति वाक्यात् किं ज्ञायते ? राज्ञः पुत्रः क्षत्रियो वा ? आर्यपुत्र इति पदमपि मनसि निधातव्यम् । आचार्यथीमस्य ऊहानुसारमादावार्याणां बृहत्परिवारे वध्वा भर्त्तारमित्थं सम्बोधयन्ति स्म । तदानीन्तवे काले वध्वा मुखाच्छब्दोऽयं गृहपतेः सुत इत्यर्थं गमयति स्म । भवतु तावत् । कालं प्राप्य शब्दोऽयं सम्मानार्थको बभूव । पुरुषा अपि पदमिदं प्रयुञ्जते स्म ।

## सप्तत्रिंशत्तमं प्रवचनम्

कुरङ्गमिगजातकाख्ये बौद्धमतस्य पालिभाषोपनिबद्धे ग्रन्थे प्रयुक्तः लुद्दपुत्तशब्दो लुब्धकजातितां बोधयति, न तु लुब्धकसूनुम्'। जातके प्रयुक्तः कत्तपुत्तशब्दोऽपि गणविशेषाभ्यन्तरतामेव गमयतीति आचार्यल्युदरस्य मतम्। जैनधर्मशास्त्रेषु कृतभूरिश्रम आचार्यशूबृङ्गो जैनधर्मशिक्षाख्ये ग्रन्थे तीर्थङ्कराय महावीराय व्यवहृतान्नायपुत्तशब्दात् नायकुलाभ्यन्तरतामेवाधिगच्छति।

पञ्चतन्त्र एव स्थानद्वये पुत्रः इति पदमर्थेऽस्मिन् ग्रन्थकृत् प्रयुयुज इति दर्शयित्वाऽऽचार्यात्सदोर्फः स्वमतं पुष्णाति। अनुवादकैरत्र विषयेऽनवधानता खलु समाश्रायि। वणिक्पुत्र इति पदं बहुधा प्रयुज्यते। कथाया उभावेव नायकौ वणिक्पुत्राविति-

पदेन निर्दिश्येते। अत्रापि एज्जर्टनाख्यः पञ्चतन्त्राध्येता वणिजोः सुतावित्यर्थं कृतवान्। तन्त्राख्यायिकायां वणिक्सुताविति पदं वीक्ष्यते। सोमदेवेनापि इदमेव पदं व्यवहृतम्। हेर्टलाख्योऽनुवादकोऽत्रापि वणिजोः सूनू इत्यर्थञ्चकार। सपद्येव उभयोरेकः सार्थवाहसुतो निगद्यते। लोहभक्षकमूषककथायां वणिक्पुत्रस्य स्थाने वणिक्सुत इति समानार्थकं पदं तन्त्राख्यायिकायां लभ्यते। क्षीणविभवो वणिक्पुत्रः लोहपलसहस्रघटितां तुलामन्यस्मिन् वणिक्पुत्रके निक्षिप्य देशान्तरं प्रयाति।

स एव वणिक्पुत्रकोऽन्यस्मिन् स्थले केवलं वणिगिति निगद्यते। पृष्टश्च तेन वणिजेति। क्षेमेन्द्रः, सोमदेवः, पूर्णभद्रश्च सन्दर्भेऽस्मिन् वणिगिति शब्दमेव प्रयुयुजिरे। पञ्चमे तन्त्रे श्रमणघातकनापितकथायां वणिक्पुत्रः सार्थवाहपुत्रश्च पुनरपि वीक्ष्येते। भूतपूर्वो वणिक्पुत्र उत्सन्नधनवंशविभवो दारिद्र्याभिभूत इति। आचार्याल्सदोर्फः सन्दर्भेऽस्मिन् जैनधर्मस्य वसुदेवहिण्डीत्याख्यं ग्रन्थं निर्दिशति यत्र इब्भपुत्र इति शब्दस्तस्मिन्नेवार्थे ग्रन्थकृता प्रयुयुजे। अमुष्य मते सर्वत्र खलु एवम्भूतस्य पदस्य वणिगित्यर्थोऽनुवादो वा विधातव्यो, न तु वणिजः सूनुर्यथा एज्जर्टनेन हेर्टलेन वा विहितः।

जातिवर्णसमाजादिद्योतकस्य पुत्र इति पदस्य स्थाने समानार्थशब्देभ्योऽप्यर्थो लक्ष्यते। प्रथितायां मनोरथध्यानकारकब्राह्मणकथायां कश्चिद् विद्याभ्यासी ब्राह्मणसूनुरिति प्रयोगः कथा-

कारेण कृतः। अन्यस्मिन् ग्रन्थे ब्राह्मणसुत इति पदं प्रयुक्तं पूर्णभद्रः, क्षेमेन्द्रश्च तं ब्राह्मणपदेन केवलमभिदधाते।

आचार्याल्सदोर्फोऽत्रैकमभिनवं प्रश्नमुत्थापयति। मन्त्रिपुत्रो यदि मन्त्रिणं, वणिक्पुत्रो यदि केवलं वणिजं, ब्राह्मणसुतो ब्राह्मणसूनुर्वा यदि केवलं ब्राह्मणमेव गमयन्ति तर्हि पुत्र इति शब्दस्तस्य पर्यायवाचिनो वा वर्गविशेषाभ्यन्तरताऽभिव्यञ्जकत्वं कथं सम्पेदिरे। प्रतिपाद्यमुपोद्बलयितुं गवेषकस्यामुष्यैतद्विषयकं समाधानं श्रोतणां कृते प्रमोदावहं भविष्यतीति मत्वाऽत्र उदीर्यते।

भारतस्याधुनातनवाक्षु जातामर्षो जनः परनिकृत्यै गर्दभ, उलूकः, शूकर, इतिपदानि प्रयुङ्क्ते। परावक्षेपं प्यायितुं गर्दभसुत उलूकसुत इत्यर्थकाः शब्दा व्यवह्रियन्ते समन्युभिर्जनैः। प्रतीच्ये जगति प्रवृत्तिरियं नो वीक्ष्यत इति चेन्न। प्रकृतविषयेऽनुसन्धाताऽसौ आरब्यशब्दप्रयोगमपि संकेतितवान्। द्विषन्निमित्तं शुनः सूनुरित्याक्रोशद्योतके पदे असकृत् प्रयुज्येते। आङ्ग्लदेशीयवाचि जातामर्षजनैर्भूयोभूयः प्रयुक्तं कुक्कुटीसुत इति पदं को न जानीत आङ्ग्लभाषाविद्! पितुः परिभूतिरात्मनः परिभूतिमतिशेते। पिता शूकरः, श्वा वाऽऽसीदिति दुर्वाचोऽवक्षेपं परां काष्ठां नयन्ति। आचार्याल्सदोर्फस्य दृष्टावेवमेव वणिक्पुत्रो ब्राह्मणपुत्र इति पदयोरर्थः शब्दशास्त्रमधीयानैरध्याहर्त्तव्यः। पितुर्वणिग्वर्णता ब्राह्मणत्वं वा व्यक्तेर्वणिग्भावं ब्राह्मणत्वं वा स्फुटतया व्यनक्ति।

# अष्टात्रिंशत्तमं प्रवचनम्

यतो हि भारते वर्षे जनसमाजेषु संस्थितिर्व्यवसायो वा वर्णाश्रमायत्तो भवति, पुत्रः, सूनुः, सुत इति शब्दकदम्बैर्वर्णौ, व्यवसायः, समाज-संस्थितिर्मर्यादा वा स्फुटीभवन्ति। आचार्याल्स-दोर्फस्य मत एज्जर्टनस्य वंशपरम्परागतो मन्त्रीत्यर्थः प्रमाण-विधुरो न वेदितव्यः। परन्तु तस्य समीचीनता नाभ्युपपद्यते। वणिक्पुत्रस्य ब्राह्मणसूनोर्वा एवम्भूतोऽर्थोऽसंगतः स्यात्। वणिक्-पुत्रस्तु तावद् वणिक्; ब्राह्मणसूनुस्तु तावद् ब्राह्मणः। एज्जर्टनोऽपि अत्र वंशपरम्परागतो वणिग् ब्राह्मणो वेत्यर्थं नाचिकीर्षत्। व्याकरणशास्त्रानुसारमेवंविधानां पदानां वणिजः सूनुर्ब्राह्मणस्य सूनुरित्यर्थोऽसमीचीनो वक्तुं न शक्यते, किन्तु व्याकरणानुसार-मेव सर्वविधपदानि व्याख्यातुं कृतः श्रमः सर्वत्र सफलो भवतीति चेन्न।

एवमेवाचार्याल्सदोर्फस्य दृष्टौ तन्त्राख्यायिकायास्तृतीयाध्यायस्यैकादशश्लोकस्यापि हेर्टल, एज्जर्टनश्च अन्यथार्थं बुबुधाते। दाक्षिणात्ये नेपालदेशीये पञ्चतन्त्रे च श्लोकेऽस्मिन् किञ्चिन्नगण्यः पाठभेदो वीक्ष्यते।

शातयत्येव तेजांसि दूरस्थोऽप्युन्नतो रिपुः।
सायुधोऽपि निकृष्टात्मा किमासन्नः करिष्यति॥

ननु श्लोकस्यास्य कोऽर्थः ? हेर्टल, एज्जर्टनश्चोभावेवैकमेवार्थं ज्ञापयामासतुः। सशक्तोऽरातिस्तु स्थानव्यवधानाद्धतवीर्यो न भवति। दूरवर्त्त्यपि सन् स नृपस्य तेजांसि गरिमाणं वा उत्सादयति। किन्तु यो रिपुः समुन्नतो नास्ति, निकृष्टात्माऽस्ति, स आसन्नोऽपि सशस्त्रोऽपि सन् किमपि कर्त्तुं न प्रभवति। आचार्याल्सदोर्फस्य मतेऽर्थोऽयं संशयच्छिन्नोऽस्ति। कथाप्रसङ्गविमुक्तः श्लोकोऽयं यदि स्यात्तर्हि व्याख्येयं सन्तोषं किल जनयति। परं श्लोकोऽयं नास्ति कथाप्रसङ्गविरहितः। कथाप्रसङ्गानुसारमेवम्भूताया व्याख्यायाः संगतिर्न वीक्ष्यते। अपरञ्च– व्याख्येयं कथाप्रसङ्गं स्पष्टतो विरुणद्धि। चिरञ्जीवी नाम काकमन्त्री स्वीयं राजानं बहुभिः श्लोकैः शास्ति—

परेषामात्मनश्चैव योऽविचार्य बलाबलम्।
कार्यायोत्तिष्ठते मोहाद् व्यापदः स समीहते॥५॥
लघुष्वपि विधातव्यं गौरवं परिपन्थिषु।
कृत्यन्तरे[illegible] भवन्ति ह्यफलाः क्रियाः॥६॥

क्षमावन्तमरिं प्राज्ञं काले विक्रमसेविनम् ।
परात्मगुणदोषज्ञमनुस्मृत्य न विश्वसेत् ॥७॥

न भीतो न परामृष्टो नापयातो न वर्जितः ।
नाशक्तोऽप्यवमन्तव्यो नैको वेति नयाधिकैः ॥८॥

नवमे श्लोके कथाप्रसङ्गं समुपेक्ष्य अन्यार्थः पञ्चतन्त्रकारस्य चिकीर्षित आसीदिति सम्भावना तुलां नाधिरोहति । द्विविधार्थप्रत्यायकं श्लोकं प्राप्य कथाप्रसङ्गमेव सुधियस्तावत् समाश्रयन्ति । द्वितीयचरणस्थोऽपीति शब्दोऽर्थवैशिष्ट्यमावहतीत्यत्र नो विस्मर्तव्यम् ।

स्वयं दूरादपि समुन्नतो रिपुस्तेजांसि शातयति । तर्हि योऽरातिर्निकृष्टप्रकृतिरस्ति सायुधश्च, स आसन्नः सन् शातयतितराम् । आचार्याल्सदोर्फस्य मतेऽर्थोऽयं सोपपत्तिकोऽस्ति ।

